Piku, John, Abik, Salim, All waiting for their birthdays. For their PORSCHE.



Mine was yesterday.

PORSCHE

SAMMO

CHANDAMAMA TOYTRONIX

Mfd. by :
**Chandamama Toytronix Pvt. Ltd.**
Chandamama Buildings,
188, NSK Salai, Vadapalani,
Madras - 600 026.




**Remote-Control PORSCHE Toy Car**

- For the first time in India
- Indigenously manufactured
- Design from SAMMO of South Korea

FROM THE HOUSE OF CHANDAMAMA

रसप्रश्नाः–

# कुम्भनिकुम्भादिवधः

(कुम्भकर्णस्य वधस्य अनन्तरं बहूनां सेनानायकानां रावणपुत्रभ्रातॄणां च वधः जातः। एतत्सर्वं श्रुत्वा यदा रावणः खेदेन उपविष्टवान् तदा इन्द्रजित् रणरङ्गं प्रविष्टवान्। एतदनन्तरकालीनाः घटनाः आधारीकृत्य वाल्मीकिरामायणकथाम् आश्रित्य अधः केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तानि उत्तराणि जानन्तु।)

I. रणरङ्गम् आगतः इन्द्रजित् मायया युद्धं कुर्वन् केन अस्त्रेण वानरप्रमुखान् रामलक्ष्मणौ च मूर्च्छितान् कृतवान्?
(अ) आग्नेयास्त्रेण। (आ) ब्रह्मास्त्रेण। (इ) ऐन्द्रास्त्रेण।

II. हनूमता आनीतानाम् ओषधिसस्यानां गन्धस्य आघ्राणेन मृताः वानराः सर्वे उज्जीविताः। किन्तु राक्षसपक्षे कोऽपि न उज्जीवितः। किमर्थम्?
(अ) ओषधिसस्यानां गन्धः तावद्दूरं न प्रसृतः।
(आ) मृतानां देहं राक्षसाः खादितवन्तः आसन् इत्यतः।
(इ) मृतानां देहाः समुद्रे पातिताः आसन् इत्यतः।

III. वानरवीरैः स्वयम् अग्रे गत्वा लङ्कानगरी आक्रान्ता। तदा यूपाक्ष-प्रजङ्घादिभिः सह युद्धार्थम् अग्रे आगतः कुम्भः कस्य पुत्रः?
(अ) रावणस्य। (आ) कुम्भकर्णस्य। (इ) खरस्य।

IV. एषः महावीरः कुम्भः केन हतः?
(अ) सुग्रीवेण। (आ) अङ्गदेन। (इ) हनूमता।

V. रणरङ्गम् आगतः कुम्भस्य सहोदरः निकुम्भः केन हतः?
(अ) सुग्रीवेण। (आ) हनूमता। (इ) लक्ष्मणेन।

उत्तराणि–

I. – (आ). II. – (इ). III. – (आ). IV. – (अ). V. – (आ).




# मैगी क्लब् निः शुल्कं उपहारान् वितरति आनन्द-सन्दोहं प्रापयति!




'मैगी ऑपरेशन वाइल्डलाइफ गेम'
इत्यनेन सार्धं वन्यजीवान् संरक्षन्तु।




'मैगी किंग ऑफ् दी जंगल गेम'
अधिगम्य कानने विहरन्तु।

आगच्छन्तु बालाः! मैगीक्लबे प्रविशन्तु, वर्षं यावत् आनन्दं अनुभवन्तु। वृत्तपत्राणि, उपहाराः, क्रीडकानि, आमोद-प्रमोदस्य अनेकानि साधनानि।

भवन्तः एतत् मैगी नूडल्स्-पुटकानां पञ्चानां रिक्त-आवरणानां मुखपृष्ठात् निस्काष्य अस्मान् प्रेषयन्तु। सहैव स्वीयं नाम-धाम, स्वेष्टं उपहारं च लिखन्तु। अपि च, यदि भवान् मैगी-क्लब्-सदस्यः नास्ति चेत्, अनुपमोऽयं अवसरः। उपरितन-विवरणप्रेषण-काले सदस्यतायै लिखन्तु। वयं भवतः उपहारेण सह निःशुल्कं मैगी-क्लब्-सदस्यता-पत्रं प्रेषयिष्यामः।



'मैगी जादू जंगल'
प्राप्य नैजं एव वनं विरचयन्तु।




आर्ची-प्रहसनं!




मैगी बर्ड-हाउसं
विरचयन्तु।

*अस्माकं संकेतः*
**मैगी क्लब्**
पो. ओ. बॉक्सः 5788,
नई दिल्ली-110 055




निः शुल्कं! मैगी "वर्ल्ड ऑफ एनीमल्स्" – प्रश्नोत्तर-पुस्तिका.

भवान् यत् उपहारत्रयं संचेष्यति तेन सार्धं निःशुल्कं 'वर्ल्ड ऑफ एनीमल्स्' – प्रश्नोत्तर-पुस्तिका, वन्य-प्राणिनां विषये रुचि-वर्धिका तथ्योद्घाटिका च। प्रत्येकमपि क्रीडाविषये विस्तरं अवधानेन परीक्ष्यताम्।







अपरोऽपि प्रस्तावः – नाधुनावधि "लॉज् ऑफ दी जंगल गेम" अधिगतम्, चेत्तदा शीघ्रं आददातु।

# चन्दमामा

संस्थापकः – 'चक्रपाणिः'    सञ्चालकः – 'नागिरेड्डी'





## दृढा आधारभूमिः स्यात् शिक्षणस्य

श्रीमान् नरसिंहराव्महोदयः इदानीं प्रधानमन्त्री अस्ति। पूर्वं, यदा एषः राजीवगान्धिमन्त्रिमण्डले शिक्षणमन्त्री आसीत् तदा एतेन राष्ट्रियशिक्षणरीतिः आरचिता आसीत्। अतः नूतनः केन्द्रीयः सर्वकारः पूर्वोक्तां शिक्षणनीतिं यदि कार्यान्वितां कुर्यात् तर्हि न तत्र आश्चर्यम्।

शिक्षणं परिवर्तनस्य साधनम् इति भाव्यते प्रायः। वयं पण्डितस्य विष्णुशर्मणः कथां जानीमः। 'राजकुमाराः शासनसमर्थाः भवेयुः' इति उद्देशेन तेन अध्यापनम् आरब्धम्। कथाकथनपद्धतिः तेन आदृता, कार्यं साधितं च। तेन बोधिताः नीतिकथाः एव इदानीं पञ्चतन्त्रग्रन्थे उपलभ्यन्ते।

अतः एवं वक्तुं शक्यते यत् शिक्षणं व्यक्तिपरिष्कारद्वारा समाजस्य सामाजिकसंस्कृतेः च उन्नतिं साधयति इति। व्यक्तित्वस्य समग्रः विकासः एव शिक्षणस्य लक्ष्यम्।

दौर्भाग्यं नाम, शिक्षणस्य उद्देशः इदानीं सिध्यन् नास्ति इति भावना सर्वत्र दृश्यते। आवश्यकतायाः उत्पत्तेः च मध्ये सामञ्जस्यं स्यात्। किन्तु अस्माकं शिक्षणसंस्थाः लक्षशः पदवीधरान् निर्मान्ति। तेनैव प्रमाणेन उद्योगावकाशाः न दृश्यन्ते। अतः निरुद्योगिनां सङ्ख्या वर्धमाना दृश्यते। एतत् सामाजिकक्षोभस्य कारणं भवितुम् अर्हति।

एवं तर्हि अस्माकं शिक्षणनीतिः सर्वथा असमीचीना इति निर्णेतुं किं शक्नुमः वयम्? एवं हि श्रूयते यत् एकस्य पदवीधरस्य निमित्तं यावत् धनं व्ययीक्रियते तावता धनेन अशीतेः बालानां शिक्षणव्यवस्था भवितुम् अर्हति इति। व्यापकतया प्राथमिकशिक्षणस्य व्यवस्था, साक्षराणां सङ्ख्यायां वृद्धिसम्पादनं च त्वरया करणीयम्। अधोमुखं स्थापितस्य शङ्कोः या गतिः सा गतिः न स्यात् अस्माकं शिक्षणस्य।


सम्पुटः – ८    सप्टम्बर् – १९९१    सञ्चिका – ६

प्रतिकृतिमूल्यं रू. ४-००  *  वार्षिकं ग्राहकशुल्कं रू. ४८-००






Cyan Magenta




इजिप्ट्-अध्यक्षेण गमाल् अब्दुल् नाजर्वर्यस्य 'पान्-अरब्' सिद्धान्ते गडाफीवर्यस्य विशेषादरः। १९६९ तमे वर्षे शान्तियुक्तक्रान्तिद्वारा आंग्लसेनां लिबियातः अपसार्य गडाफी अधिकारसूत्राणि गृहीतवान्। तदारभ्य सः अरब्देशानाम् ऐक्यं विशेषतः प्रतिपादयन् अस्ति। १९७१ तमे वर्षे तेन सूचितं यत् सिरिया लिबियादेशे अन्तर्गतः भवतु इति। अनन्तरं सः इजिप्ट्-

# क्षीयमाणाः सीमारेखाः

गतस्य मार्च्मासस्य अन्ते उत्तराफ्रिकादेशस्य टोब्रुक्समीपे ईजिप्ट्लिबियासीमाद्वारस्य समीपे काचित् महत्त्वपूर्णा घटना प्रवृत्ता, या च घटना प्रायः बहुभिः विशेषतः न लक्षिता। लिबियानायकः कर्नल् मुअमर् गडाफी ट्राक्टर्यन्त्रेण सीमाद्वारं पातितवान्। 'उभयोः देशयोः मध्ये स्थितायाः विभाजकभित्तेः पातनं कृत्वा सत्सम्बन्धः वर्धनीयः' इति आशयेन तेन एवं कृतम्।

'समानजातीयानां मध्ये स्थिता कृत्रिमा विभाजकरेखा एतया घटनया अपसारिता' इति वदति गडाफी। 'अरब्-ऐक्यम्' इत्येतस्य स्वप्नस्य साकारीकरणार्थं गडाफीवर्येण बहूनि कार्याणि कृतानि। तदङ्गतया एव एतत् अपि कृतम्।

लिबिययोः ऐक्यम् अपि प्रतिपादितवान्। किन्तु तावता तत्र अन्वर् सादत् अधिकारपदम् आरूढवान्। अतः एकताचर्चा दूरङ्गता। सीमारेखाविषये विवादः अपि आरब्धः। १९७७ तमे वर्षे लघु युद्धम् अपि प्रवृत्तम्। १९८१ तमे वर्षे होजनी मुबारक् अध्यक्षपदम् अलङ्कृतवान्। तदनन्तरम् अपि वैरं तु अनुवृत्तम्।

एतावत् एव न, अरब्-इस्रेल् युद्धस्य अनन्तरं १९७९ तमे वर्षे ईजिप्ट्देशः इस्रेल्देशेन सह सन्धिम् अकरोत्। एतेन कुपिताः अरब्देशाः ईजिप्ट्देशेन सह राजदूतसम्बन्धं निराकृतवन्तः। एवं स्थिते अपि होजनी मुबारक् अधिकारसूत्रं गृहीत्वा ईजिप्ट्सम्बन्धवर्धने एकतासम्पादने च प्रयत्नं कृतवान्। एतेन अरबदेशेषु मानसिकं

परिवर्तनं जातम्। एतस्य परिणामतः १९८९ तमे वर्षे 'मोराको' इत्यत्र प्रवृत्ते अरब्समावेशे इजिप्ट्देशः 'अरब्लीग्' प्राविशत्।

एतदनन्तरं गडाफी-मुबारक् चर्चायाः परिणामतः इजिप्ट्-लिबियासम्बन्धः उत्तमः जातः। परस्परप्रवेशे प्रवेशपत्रस्य आवश्यकता निवारिता। प्रयाणनियमाः शिथिलीकृताः। देशयोः उभयोः मध्ये रैल्मार्गाः निर्मिताः। पारस्परिकः वाणिज्यसम्बन्धः अभिवृद्धः। वणिजः प्रजाः च एतेन तृप्ताः जाताः।

इतःपरं समानजातीयानां मध्ये साम्राज्यवादिभिः उपस्थापिता कृत्रिमा सीमारेखा अपसारणीया इति आशयं प्रकटितवान् गडाफी। आंग्लसैनिकाः लिबियादेशं परित्यज्य गतवन्तः यत् तस्य २१ तमस्य वार्षिकोत्सवस्य स्मरणार्थम् एतत् कार्यं करणीयम् इति आदिष्टवान् सः, तथैव कृतवान् चापि।

जर्मनीदेशयोः मध्ये स्थिता विभाजकभित्तिः पतिता। जर्मन्देशः अखण्डः जातः। इदानीं गडाफीवर्येण ये प्रयत्नाः आरब्धाः तेषां परिणामतः बहूनां देशानां मध्ये स्थिता सीमारेखा अपगता भवेत् इति आशास्यते।



कर्नल् मुअमर् गडाफी



# आत्मीयेषु आदरः

करवीरपुरे पूर्वं वीणापाणिः नाम कश्चित् आसीत्। तस्य पत्न्याः नाम वरलक्ष्मीः इति। तयोः रामनाथः नाम पुत्रः, सुशीला नाम पुत्री च आस्ताम्। वीणापाणिः मातापित्रोः एकमात्रपुत्रः। अतः तस्य मातापितरौ तेन एव सह निवसतः। वीणापाणिः सर्वकारीये कार्यालये उद्योगी। समीचीनं वेतनं प्राप्यते तेन। वीणापाणेः पिता शान्तरामः वृद्धः चेदपि कार्यशीलः। सः प्रतिवेशिबालकान् पाठयति। गृहं परितः स्थिते स्थले शाकादिकं वर्धयति। वीणापाणेः माता शान्ता पाकादिकार्यं निर्वहन्ती उद्यानकार्ये अपि साहाय्यं करोति।

एवम् आनुकूल्ये सत्यपि वरलक्ष्मीः गृहे श्वश्रू-श्वशुरयोः स्थितिं न सहते। पत्या पुत्राभ्यां च सह स्वतन्त्रतया निवासः करणीयः इति तस्याः इच्छा। किन्तु वीणापाणिः पत्नीं तदा तदा बोधयति यत् वृद्धयोः माता-पित्रोः परित्यागः न उचितः इति। एतस्मिन् विषये तदा तदा तयोः कलहः अपि भवति स्म।

वरलक्ष्म्याः सहोदरी गिरिजा। सौभाग्यवशात् करवीरपुरीयः चन्द्रनाथः एव तां परिणीतवान्। पतिगृहम् आगतां भगिनीं गिरिजां द्रष्टुं कदाचित् गतवती वरलक्ष्मीः। किन्तु तत्रत्यां परिस्थितिं दृष्ट्वा सा नितराम् आश्चर्यचकिता।

तस्मिन् गृहे चत्वारः प्रकोष्ठाः सन्ति। किन्तु गृहसदस्याः बहवः। चन्द्रनाथस्य मातापितरौ, प्राप्तवयस्का भगिनी, तरुणः सहोदरः, वृद्धा पितामही इत्यादयः सन्ति तत्र। चन्द्रनाथः यावत् सम्पादयति तेनैव कुटुम्बनिर्वहणं प्रचलति।

गृहम् आगतां वरलक्ष्मीं दृष्ट्वा गिरिजायाः श्वश्रूः मीनाक्षी आदरेण स्वागतीकृत्य– "भवत्याः श्वश्रूः परह्यः मन्दिरे मिलिता आसीत्। मम स्नुषा मां मम पतिं च महता आदरेण पश्यति इति सा सन्तोषातिरेकेण



अनन्तरं सा एकान्ते भगिनीं पृष्टवती– "भोः, का दुर्गतिः भवत्याः! आजीवनं भवत्याः एषा एव स्थितिः वा?" इति।

"मम कुटुम्बे कः दोषः दृष्टः भवत्या?" इति आश्चर्येण पृष्टवती भगिनी गिरिजा।

"अये, भवती मन्दमतिः। इदानीं सर्वेषां सेवायाम् उत्साहः स्यात् भवत्याः। किन्तु यदा अपत्यानि जायन्ते तदा कष्टम् अनुभूयते। एतावन्तः जनाः भवत्याः पत्युः सम्पादनम् आधारीकृत्य जीवन्ति! पतिं बोधयित्वा पत्या सह इदानीम् एव स्वतन्त्रगृहे निबसतु भवती। तथा कृतं चेदेव भवती तदा तदा नूतनानि वस्त्राणि आभरणानि च पश्येत्। अन्यथा कालान्तरे उपवासः एव शरणं भवेत्" इति बोधितवती वरलक्ष्मीः।

भगिन्याः उपदेशवचनानि श्रुत्वा नितरां खिन्ना गिरिजा। तथापि सा मौनं सर्वं श्रुतवती। प्रत्युत्तरं किमपि न दत्तवती।

कदाचित् वरलक्ष्म्याः श्वश्रूः शान्ता अस्वस्था जाता। अतः गृहकार्याणि सर्वाणि वरलक्ष्म्या एव निर्वोढव्यानि अभवन्। एकस्मिन् दिने प्रातः तस्याः पतिः वीणापाणिः कार्यालयं प्रति गमनार्थं त्वरां प्रदर्शयन्– "विलम्बः जातः। शीघ्रं परिवेषयतु" इति उक्तवान्। एतत् श्रुतवत्याः वरलक्ष्म्याः कोपः चतुर्गुणितं प्रवृद्धः। सा कोपेन पतिम् उक्तवती– "मम किं दश हस्ताः सन्ति, येन अहं सर्वाणि कार्याणि समये कुर्याम्? सर्वे माम्

उक्तवती। एतस्मिन् काले श्वश्रूश्वशुरयोः विषये आदरवत्यः स्नुषाः विरलाः एव। एतादृश्याः भवत्याः भगिनी एव मम गृहस्य स्नुषा जाता अस्ति। भवत्याः भगिनी अपि गुणवती एव। अल्पैः एव दिनैः सा सर्वेषां हृदयं जितवती अस्ति" इति उक्तवती।

एतत् श्रुत्वा वरलक्ष्मीः मनसि एव उक्तवती– 'आम्। यावत् सेवा क्रियते, यावच्च भोजनादिकं समये व्यवस्थाप्यते, तावत् स्नुषा गुणवती। अत्र अल्पः लोपः जातः चेदपि सा दुष्टा इति उच्यते। एतत् गृहं तु विपणिः इव दृश्यते। अहो मम भगिन्याः दौर्भाग्यम्!' इति। किन्तु प्रकटतया तु शुष्कं हासं प्रकटितवती।

एव अवलम्बन्ते। कथम् अहं सर्वं समये कुर्याम्? स्वतन्त्रतया निवसाव इति अहं सहस्रवारम् उक्तवती। किन्तु भवान् तद्विषये मौनी। यदि दैवं मां परलोकं नयेत् तर्हि सर्वे तृप्तिं प्राप्नुयुः'' इति।

एतत् श्रुतवतः वीणापाणेः अपि कोपः आगतः। सः क्रोधेन– ''यावत् एतस्मिन् गृहे विभागः न भवति तावत् भवत्याः तृप्तिः नास्ति इति भाति। अस्तु तावत्, भवतीम् अद्यैव तर्पयामि। नूतनं गृहम् अन्विष्य प्राप्य एव भोजनं करिष्यामि'' इति उक्त्वा भोजनम् अकृत्वा एव गृहात् निर्गतवान्।

कार्यालयम् अगत्वा गृहम् अन्विष्टवान् वीणापाणिः। सौभाग्यवशात् तस्मिन् एव दिने गृहं प्राप्तं तेन। पत्नीपुत्राभ्यां सह नूतने भाटकगृहे वासः अपि आरब्धः।

सः यस्मिन् भवने निवसति तस्मिन् त्रीणि गृहाणि सन्ति। एकस्मिन् वीणापाणिः अपरस्मिन् गृहस्वामी, अन्यस्मिन् अन्यत् कुटुम्बं च निवसति। गृहस्वामिनः पत्नी पार्वती। अन्या प्रतिवेशिनी सुन्दरी। द्वित्रेषु दिनेषु एव वरलक्ष्मीः तयोः मैत्रीं सम्पादितवती। यथा यथा मैत्री प्रवृद्धा तथा तथा तयोः स्वभावस्य अपि परिचयः जातः।

पार्वती धार्ष्ट्ययुक्ता। अतः तस्याः जिह्वायाः तीक्ष्णतां सोढुम् अशक्तः तस्याः पतिः तस्याः परमदासः जातः आसीत्। पार्वत्याः द्वौ पुत्रौ। लालनाधिक्यकारणतः तौ



दुष्टौ जातौ। तयोः विषये ग्रामीणाः सर्वे जुगुप्सां प्रकटयन्ति। किन्तु तौ यद्यत् कुरुतः तत्सर्वं प्रियं पार्वत्याः। अतः तयोः दौष्ट्यं दिने-दिने वर्धते।

सुन्दरी वरलक्ष्मीः च समानवयस्के। सुन्दरी मृदुस्वभावयुक्ता। अतः श्वश्रूः तां सदापि पीडयति। आदिनं निरन्तरं कार्यं क्रियते चेदपि निन्दनवचनं श्रोतव्यम् एव तया। श्वशुरः अपि दर्पेण व्यवहरन् स्नुषां तर्जयति। पतिः तु मौनं तिष्ठति। सुन्दरी कष्टेन दिनानि यापयति।

मासद्वयम् अतीतम्। वरलक्ष्म्याः पुत्रः रामनाथः पार्वत्याः पुत्रयोः मैत्रीं सम्पादितवान्। सहवासदोषतः तस्मिन् अपि



दुर्गुणाः आगताः। शालाम् आगच्छन्, मार्गेषु अटन्, क्रीडन् च समयं यापयति सः। असत्यकथनं दौष्ट्याचरणं च अभ्यस्तं तेन।

पूर्वं वरलक्ष्मीः यदा श्वशुराभ्यां सह वसति स्म तदा श्वशुरः शान्तारामः एव पौत्रस्य शिक्षणविषये चिन्तयति स्म। सद्व्यवहारान् पाठयति स्म। काले काले नीतिं बोधयति स्म। दोषः कृतः चेत् दोषानुगुणं दण्डयति स्म। विनयादीन् सद्गुणान् योग्येन क्रमेण ज्ञापयति स्म। पौत्रे प्रीतिम् अपि प्रदर्शयति स्म। इदानीं तादृशः सहवासः नास्ति इत्यतः रामनाथः दुष्टताम् अभ्यस्य मातरम् अपि धिक्कृत्य व्यवहरति।

कदाचित् वरलक्ष्मीः शाकादिकं क्रीत्वा गृहं प्रत्यागच्छन्ती आसीत्। तदा पत्या निर्दयं ताड्यमाना सुन्दरी दृष्टा तया। वरलक्ष्मीः झटिति गत्वा ताडनात् सुन्दरीं रक्षन्ती कोपेन पृष्टवती– "किमर्थम् एतां पशुम् इव निर्दयं ताडयन्ति भवन्तः?" इति।

तदा पार्श्वे एव स्थिता सुन्दर्याः श्वश्रूः कोपेन– "अये,निर्गच्छतु इतः। मम पुत्रः यथा इच्छति तथा व्यवहरति। इच्छानुगुणं व्यवहर्तुं धैर्यम् अस्ति तस्य। भवत्याः पतिः इव निर्वीर्यः न सः" इति उक्तवती।

"किम् उक्तं भवत्या?" इति कोपेन पृष्टवती वरलक्ष्मीः।

"वस्तुस्थितिकथने का भीतिः मम? पुनरपि वदामि– भवत्याः पतिः निर्वीर्यः इति। पत्नीवचनं पालयन् वृद्धौ मातापितरौ परित्यज्य आगतः सः। पत्नीं योग्येन क्रमेण दण्डयितुम् अपि असमर्थः सः निर्वीर्यः पत्नीदासश्च खलु?" इति उच्चैः उक्तवती सुन्दर्याः श्वश्रूः।

एतत् महत् अपमाननं सोढुम् अशक्ता वरलक्ष्मीः अश्रूणि स्रावयन्ती ततः आगतवती।

कार्यालयतः आगतः वीणापाणिः पत्नीं सन्तोषेण उक्तवान्– "भवत्याः श्वशुरेण निधिः प्राप्तः इति श्रूयते" इति।

वरलक्ष्मीः पूर्वतनं कट्वनुभवं सर्वथा विस्मृत्य सन्तोषेण पृष्टवती– "निधिः! कथं प्राप्तः? कुत्र प्राप्तः?" इति।

"मम पिता प्राचीनस्य मञ्चस्य उपरि शयनं करोति खलु? मञ्चे मत्कुणाः प्रविष्टाः इति पिता मञ्चम् आतपे स्थापयितुम् उद्युक्तः। बहिः नयनसमये प्रमादवशात् मञ्चः पतितः, भग्नः च। तदा मञ्चमध्ये प्राचीनैः गोपिताः रत्नादयः पतिताः इति श्रूयते। तेषां मूल्यं लक्षाधिकरूप्यकात्मकं स्यात्" इति उक्तवान् वीणापाणिः।

"एवं वा? एवं तर्हि अस्माकं दारिद्र्यम् अपगतम्। गच्छाव तावत् गृहं प्रति" इति उत्साहेन उक्तवती वरलक्ष्मीः।

"मम पित्रा निधिः प्राप्तः, सत्यम्। किन्तु तावता तत् गृहम् अस्मदीयं भवेत् वा?" इति पृष्टवान् वीणापाणिः।

एतत् श्रुत्वा शिरः अवनमय्य मौनं स्थितवती वरलक्ष्मीः। तावता तत्र आगता वरलक्ष्म्याः भगिनी गिरिजा अग्रजाम् उक्तवती– "भगिनि! अपराधं कृतवती अहं कथं वा श्वशुरयोः पुरतः सधैर्यं तिष्ठामि इति चिन्तयति वा भवती? चिन्ता मास्तु। मनसः परिवर्तनं प्राप्य आगच्छन्तीं स्नुषां भवतीं स्वागतीकर्तुम् उत्सुकौ एव तौ। भवत्याः पत्या मया च भवत्याः मनसः परिवर्तनार्थं यत् अभिनीतं तत् तौ जानीतः" इति।

"किम् अभिनीतं भवद्भ्याम्?" इति आश्चर्येण पृष्टवती वरलक्ष्मीः।

"आम्। धने व्यामोहः, आत्मीयेषु अनादरः च आसीत् भवत्याः। एतत् जानन्तौ आवां योजनां कृतवन्तौ। गृहान्तरे वासः मम अनुरोधकारणतः आवुत्तेन अङ्गीकृतः। विशिष्टं गृहम् अन्विष्टं मया। प्रतिवेशिनां व्यवहारतः विवेकः प्राप्तः खलु भवत्या? किन्तु निधिप्राप्तिविषयः मिथ्या। सा तु घटना कल्पिता" इति उक्तवती गिरिजा।

अनुजायाः वचनानि श्रुत्वा वरलक्ष्मीः हसन्ती– "भगिनि! श्वशुरेण निधिः प्राप्तः इति वार्ता मिथ्या स्यात्। किन्तु मया तु अमूल्यः विवेकनिधिः प्राप्तः। अक्षय्यः निधिः एषः। अद्यैव गत्वा श्वशुरौ नमस्कृत्य क्षमां प्रार्थयिष्यामि" इति उक्तवती।



# चोराणाम् अन्वेषणम्

भूस्वामिनः गृहे कदाचित् चौर्यं प्रवृत्तम्। अमूल्यानि आभरणानि चोरितानि अभवन्। चोरितेषु कस्यचित् आभरणस्य विक्रयणे उद्युक्तः चोरः दिनद्वयाभ्यन्तरे बद्धः। एवं बद्धः न अन्यः, अपि तु भूस्वामिगृहस्य सेवकः रामरूपः एव। 'एतादृशं महत् चौर्यम् एकेन केवलेन कृतं न स्यात्। एतस्य साहाय्यकाः अन्ये स्युः एव' इति भूस्वामिनः विचारः। किन्तु बहुधा पृष्टं चेदपि साहाय्यकानां नामानि न उक्तवान् रामरूपः। भूस्वामी रामरूपम् अन्धकारमये प्रकोष्ठे स्थापितवान्।

तस्मिन् दिने सायङ्काले भूस्वामिनः कार्याणां निर्वाहकः नयपतिः रामरूपस्य समीपं गत्वा उक्तवान्– "भोः रामरूप, भवता यदि सत्यम् उच्येत तर्हि भूस्वामी क्षमां प्रदर्शयेत्। किन्तु भवता न उच्यते चेदपि भवतः साहाय्यकाः के आसन् इति अहं ज्ञातवान्। चौर्ययोजना भवता एव कृता इति तैः उक्तम्" इति।

"मया योजना कृता आसीत् इति? केन तथा उक्तम्?" इति कोपेन पृष्टवान् रामरूपः।

"तस्य नाम....., तस्य नाम..... तिष्ठतु स्मरामि ननु। तस्य नाम...." इति वाक्यम् अर्धे स्थगितवान् नयपतिः।

"तथा उक्तवान् सम्मार्जकः वेङ्कटः स्यात्" इति पुनरपि कोपेन उक्तवान् रामरूपः।

"तस्य नाम वेङ्कटः इति न" इति उक्तवान् नयपतिः।

"तर्हि रक्षकः भीमबलः स्यात्" इति उक्तवान् रामरूपः।

"न। सः अपि न" इति उक्तवान् नयपतिः।

"चौर्ये तु वयं त्रयः एव सम्मिलिताः आस्म। एतदतिरिक्तेन केन तथा उक्तं स्यात्?" इति चिन्तायुक्तेन स्वरेण उक्तवान् रामरूपः।

चोराः के इति सुस्पष्टं ज्ञातं भूस्वामिना। सः चोरान् गृहीत्वा कारागारं प्रेषितवान्।





# अपूर्वस्य साहसगाथा

## ५

(दिव्यानन्दमुनिना सृष्टः 'अपूर्वः' नाम अपूर्वमानवः गजानां साहाय्येन, अग्निना दह्यमानानि दरिद्राणां गृहाणि रक्षितवान्। समीरनामकं बालकं चोरेभ्यः रक्षित्वा तद्द्वारा तान् चोरान् राजाधीनान् कारितवान्। चोराः यदा पश्चात्तापेन दग्धाः अभवन् तदा अपूर्वः कृत्यैः तान् रक्षित्वा सन्मार्गगामिनः कृतवान्। मरणदण्डनात् विमुक्तिं प्राप्य चोराः सत्प्रजाः जाताः। तदनन्तरम्.....)

अपूर्वः स्वस्य सृष्टेः कारणीभूतस्य दिव्यानन्दमुनेः आश्रमं गत्वा मुनिं श्रद्धया नमस्कृत्य एतावत्पर्यन्तं यत् प्रवृत्तं तत् विस्तरेण निवेदितवान्।

"वत्स! मम आशयस्य अनुगुणम् एव व्यवहरन् भवान् मम मनोरथं सफलीकृतवान्। एतेन अहं नितरां सन्तुष्टः अस्मि। भवतः जीवनम् इतः परम् अपि एतादृशम् एव भवतु। परोपकारः जीवनस्य लक्ष्यं भवतु।" इति प्रीत्या उक्त्वा आशीर्वादेन अनुगृहीतवान् दिव्यानन्दमुनिः।

"श्रीमन्! जातमात्रेण मया कष्टमय्यः परिस्थितयः एव दृष्टाः। कष्टानां निवारणे एव मम समयः यापितः अभवत्। भगवता सृष्टस्य एतस्य प्रपञ्चस्य सौन्दर्यम् आतृप्ति परिशीलनीयम् इत्येषा मम इच्छा अपूर्णा एव तिष्ठति खलु?" इति गुरुं दिव्यानन्दमुनिं निवेदितवान् अपूर्वः।



"भवतः स्वरूपम् एव तादृशम्। भवान् यत्र कुत्रापि वा गच्छतु, तत्रत्या परिस्थितिः भवन्तं कार्ये प्रेरयेत् एव। प्रपञ्चः आनन्दनिलयः अस्ति चेदपि मानवाः स्वकीयाभिः स्वार्थभावनाभिः दुराशाभिः च तं शोकमयं कुर्वन्ति। सन्तोषेण स्थातव्यं चेत् मनः सदा परिशुद्धं स्यात्। यावत् मानवानां चञ्चलं मनः परिष्कृतं न भवेत् तावत् तैः अनुभवादिभिः विवेकं प्राप्य अग्रे गन्तव्यं भवति। ये अज्ञानादिकारणतः दुर्मार्गम् आश्रितवन्तः ते अस्माभिः प्रयत्नेन सन्मार्गे प्रेरणीयाः। एतत् अस्माकम् आद्यं कर्तव्यम्। एतत् मया ज्ञापनीयं नास्ति। यतः एषः गुणः भवति प्रकृतिगुणरूपेण स्थितः अस्ति। अतः कर्तव्यं श्रद्धया पालयता भवता, तन्मध्ये प्राप्ते अवकाशे अन्यत् इष्टम् अपि पूरणीयम्। जीवने कदापि कर्तव्यविमुखता न स्यात्" इति बोधितवान् दिव्यानन्दमुनिः।

अपूर्वः गुरुं नमस्कृत्य कुटीरात् बहिः आगत्य क्रमशः वेगं वर्धयन् अदृश्यतां गतवान्।

* * * *

सायङ्कालसमये दीपपङ्क्त्या शोभमानः कश्चन प्रदेशः दृष्टः अपूर्वेण। सः वेगं न्यूनीकृत्य अधः आगतवान्। तेन इदानीं रत्नपुर्याः राजधानी प्राप्ता अस्ति। विशाले मुख्यमार्गे प्रजाः सम्मिलिताः दृष्टाः तेन।

अपूर्वः मन्दम् अग्रे गत्वा जनसम्मर्दे लीनः जातः। तस्य आगमनम् उपस्थितिं वा कोऽपि न ज्ञातवान्।

द्वौ राजभटौ सडिण्डिमघोषं वार्तां प्रसारयतः स्म— "भो भोः जनाः, रत्नपुरीवासिनः! शृण्वन्तु सर्वे। राजकुमारी एषु दिनेषु अस्वस्था इति भवन्तः सर्वे जानन्ति एव। राजवैद्यानां चिकित्सा अपि सर्वथा विफला। अतः राजा उद्घोषयति यत् यः राजकुमार्याः रोगम् अपनेष्यति तस्मै तस्य यावान् भारः तावत् सुवर्णं दीयते इति। शृण्वन्तु भोः शृण्वन्तु" इति।

जनाः एतत् आसक्त्या शृण्वन्ति। किन्तु राजकुमार्याः रोगस्य अपनयनम् अस्माभिः न शक्यते इति स्वगतं वदन्तः ते मौनं ततः

निर्गच्छन्ति। एवं जनाः सर्वे निर्गताः। अन्यत्र उद्घोषणार्थं राजभटौ अपि ततः निर्गतौ। सर्वेषु गतेषु अपि द्वौ तत्रैव स्थितवन्तौ। अपूर्वः कुतूहलेन तयोः सम्भाषणं रहसि तिष्ठन् श्रुतवान्।

"एतादृशम् उद्घोषणम् एव बहोः कालतः अहं प्रतीक्षमाणः आसम्" इति उक्तवान् तयोः अन्यतरः। एवं वक्ता उन्नतकायः आसीत्। दीर्घं श्मश्रु तस्य। कृष्णवस्त्रेण उष्णीषं रचितवान् आसीत् सः। तस्य नेत्रे सर्पस्य नेत्रे इव प्रकाशेते।

"श्रीमन्! राजकुमार्याः चिकित्सार्थं गमनसमये पूर्णोदरं भोजनं कृत्वा गन्तव्यम्। तदा तु शरीरस्य भारः वर्धिष्यते। तावता एव प्रमाणेन सुवर्णम् अधिकं प्राप्यते। यदि भारयुक्तानि वस्त्राणि धृतानि स्युः तर्हि अपि लाभः अधिकः। एवं ननु?" इति हसन् उक्तवान् अपरः। एतस्य मुखे दीर्घं श्मश्रु विराजते।

"शिष्योत्तम! भवतः योजना अपूर्वा एव। किन्तु वत्स! एषः भवतः गुरुः सर्पकेतुः अहं भवतः अपेक्षया अपि बुद्धिमान् अस्मि। मया यत् तन्त्रम् आश्रितं तत् सुवर्णस्य प्राप्त्यै केवलं न" इति साभिमानम् उक्तवान् दीर्घकायः।

"तर्हि भवतः उद्देशः कः?" इति कुतूहलेन पृष्टवान् शिष्योत्तमः।

"एषः भवतः गुरुः अचिरात् एव एतस्य



राज्यस्य उत्तराधिकारी भविष्यति। ज्ञातं वा?" इति हसन् उक्तवान् सर्पकेतुः।

"तत् कथं वा शक्यते? राजा भवतः शिष्यत्वम् अङ्गीकृत्य राज्यं भवतः पदतले अर्पयिष्यति वा?" इति कुतूहलेन पृष्टवान् शिष्योत्तमः।

"रे मूर्ख! उपायः सर्वसाधकः। राजा राज्यं सदक्षिणं मम हस्ते यथा निक्षिपेत् तथा योजनां कृतवान् अस्मि" इति हसन् उक्तवान् सर्पकेतुः।

"तच्च कदा सम्भाव्यते? कथं सम्भाव्यते?" इति पुनः पृष्टवान् शिष्योत्तमः।

"रे मूर्ख! राज्ञः एकमात्रपुत्री एषा



राजकुमारी इति जानाति खलु भवान्?" इति पृष्टवान् सर्पकेतुः।

"आम्। तत् तु जानामि" इति उत्तरं दत्तवान् शिष्योत्तमः।

"यदि राजकुमारी मह्यं दीयेत तर्हि एव तस्याः रोगः अपनीयते मया इति वदिष्यामि। राजा मम वचनम् अङ्गीकरिष्यति। जामाता अहम् एव खलु राज्यस्य उत्तराधिकारी भविष्यामि। दक्षिणारूपेण राजकुमारी अपि प्राप्यते मया" इति विवरणं दत्तवान् सर्पकेतुः।

"एवं वा! अपूर्वः उपायः भवतः। एतदर्थम् एव खलु– राजकुमारी अज्ञातेन रोगेण ग्रस्ता यथा स्यात् तथा कृतवान् भवान्?" इति पृष्टवान् शिष्योत्तमः।

"आम्। किन्तु केचन व्यवहाराः वचनैः न प्रकटनीयाः। कः जानाति – कदा दैवम् अस्मद्विरुद्धं भवति इति? तदस्तु, मम योजनायाः कार्यान्वयने भवतः साहाय्यम् आवश्यकम्। अहं स्वयं गत्वा यदि राजकुमारी मह्यं दातव्या इति वदेयं तर्हि मम गौरवस्य हानिः भवेत्। अतः भवता अद्य गत्वा वक्तव्यं यत् ,कष्टनिवारकः कश्चन दिव्यः वटवृक्षः अरण्ये अस्ति इति। श्वः सायङ्कालसमये राजा तत्र यथा आगच्छेत् तथा करणीयं भवता। स च वटवृक्षः कुत्र इति जानाति खलु भवान्?" इति पृष्टवान् सर्पकेतुः।

"आं स्मरामि। अरण्ये नदीतीरे प्राचीनदेवालय-वल्मीकयोः मध्ये स च वटवृक्षः अस्ति। तस्य वृक्षस्य कोटरे तिष्ठन् भवान् कञ्चित् वणिजं भायितवान् आसीत्। तदा स च वणिक् धनग्रन्थिं तत्रैव परित्यज्य भीत्या पलायनं कृतवान् आसीत्" इति उक्तवान् शिष्योत्तमः।

"आं, स एव वटवृक्षः। वटवृक्षं प्रति गमनार्थं मार्गं सम्यक् निर्दिशतु भवान् राज्ञः पुरतः। राजा वटवृक्षसमीपं यावत् न आगच्छेत् ततः पूर्वम् एव भवान् आगत्य कोटरे उपविशतु। नगरे किमपि खादन् वृथा समयं मा यापयतु। यदा महाराजः वृक्षसमीपम् आगत्य नमस्कृत्य विनयेन

तिष्ठति तदा भवता गम्भीरस्वरेण, मया सूच्यमानानि वचनानि वक्तव्यानि'' इति उक्तवान् सर्पकेतुः।

''अस्तु श्रीमन्, भवतः आदेशं शिरसा वहामि'' इति विनयेन गुरुं सर्पकेतुम् उक्तवान् शिष्योत्तमः।

''भवता राजा वक्तव्यः— 'इतः अनतिदूरे प्राचीने देवालये कश्चन संन्यासी निवसति। यदि तस्मै राजकुमारी दीयते तर्हि तस्याः व्याधिः समूलम् अपगच्छेत्। सः संन्यासी केवलं, राजकुमार्याः व्याधेः निवारणे समर्थः, नान्यः। यदि संन्यासिने राजकुमारी न दीयेत तर्हि सा अचिरात् एव मरणं प्राप्नुयात्। तदा राज्यं उत्तराधिकारिविहीनं भवेत्' इति। एतत् श्रुत्वा राजा प्राचीने देवालये उपविष्टवतः मम समीपम् आगमिष्यति। माम् आदरेण राजधानीं नेष्यति। अहं च राज्ञा सह राजधानीं गत्वा राजकुमारीं परिणीय तस्याः व्याधिं निवारयिष्यामि'' इति उक्तवान् सर्पकेतुः।

''गुरुवर्य! प्रतिदिनं प्रातः तुलसीरसः, सायं बिल्वपत्ररसः च सेवितः चेत् अल्पेन एव कालेन रोगः अपगमिष्यति इति खलु भवता उक्तम्? राजवैद्याः तु रोगलक्षणम् एव ज्ञातुम् अशक्नुवन्तः चिकित्सायाम् असफलाः जाताः। भवता यदि राजकुमार्याः व्याधिः प्रथमं निवार्येत तर्हि राजा कृतज्ञताभावेन भवते स्वपुत्रीं दद्यात् एव। विवाहः सर्वेषां



सम्मुखे सवैभवं प्रचलेत्। वरस्य भवतः आत्मीयं मां सर्वे आदरेण पश्येयुः'' इति सूचितवान् शिष्योत्तमः।

''रे मूर्ख! भवतः लोकानुभवः न्यूनः। राजकुमारी सर्वप्रथमं परिणेतव्या। विवाहात् पूर्वं दिनानि यापितानि चेत् कदाचित् हानिः सम्भवेत्। अपायः कदा कुतः आगच्छेत् इति कोऽपि न जानाति। अतः लक्षितस्य कार्यस्य अविलम्बेन साधनं बुद्धिमतः प्रथमं लक्षणम्। जनानाम् आदरः प्राप्तव्यः इति खलु भवतः इच्छा? यदा अहं राजा भविष्यामि तदा भवन्तम् आन्तरङ्गिकं करिष्यामि। तदा भवन्तं जनाः महता आदरेण पश्येयुः एव'' इति उक्तवान् सर्पकेतुः।




"अस्तु श्रीमन्" इति अङ्गीकारपूर्वकं शिरः चालितवान् शिष्योत्तमः।

"हुँ, गच्छतु राजभवनम्। मया यथा उक्तं तथा आचरन् कार्यं साधयतु" इति उक्त्वा शिष्योत्तमं सम्प्रेष्य स्वयं च अरण्यं प्रति प्रस्थितवान् सर्पकेतुः।

समग्रं सम्भाषणं श्रुतवता अपूर्वेण ज्ञातं यत् राजकुमार्याः व्याधिः एतेन दुष्टेन सर्पकेतुना मन्त्रादिप्रयोगतः कल्पितः। विनायासं तं व्याधिं निवारयन् एषः राजकुमारीं परिणेतुं सङ्कल्पितवान् अस्ति इति।

अपूर्वः सर्पकेतुम् अनुसृतवान्। सर्पकेतुः अनतिदूरस्थे अरण्ये स्थितं प्राचीनालयं प्राप्य मृगचर्म प्रसार्य तदुपरि उपविष्टवान्। मानवकपालादिकम् अन्यानि वर्णमयानि वस्तूनि च आत्मानं परितः स्थापितवान्।

रात्रेः प्रथमे यामे शिष्योत्तमः आगत्य सर्पकेतुं निवेदितवान्– "श्रीमन्! भवता यथा सूचितं तथैव कृतवान्। राजा मध्यरात्रसमये एकाकी एतस्य वृक्षस्य समीपम् आगमिष्यति" इति।

"साधु, वत्स! साधु! इतः परं भवान् वृक्षकोटरे एव उपविशतु। मया उक्तानि वचनानि मनसि एव पुनः पुनः स्मरतु। राजा यदा उपस्थितः भविष्यति तदा भवता तानि वचनानि न्यूनाधिक्यं विना वक्तव्यानि" इति सूचितवान् सर्पकेतुः।

शिष्योत्तमः अङ्गीकारपूर्वकं शिरः चालितवान्। ततः प्रस्थाय वृक्षस्य कोटरे उपविष्टवान् च।

अन्धकारमयी रात्रिः। राजा शिष्योत्तमस्य वचनेषु विश्वसन् अङ्गरक्षकान् दूरे एव स्थगयित्वा एकाकी वटवृक्षस्य समीपं गतवान्। अपूर्वः अपि इतः पूर्वम् एव विना शब्दं वृक्षम् आरुह्य निलीय उपवष्टिवान् आसीत्।

वृक्षसमीपम् आगतः राजा अश्वात् अवतीर्य जानुभ्यां वृक्षस्य पुरतः उपविश्य करौ योजयित्वा भक्त्या वटवृक्षं प्राथितवान्– "वृक्षोत्तम! वटश्रेष्ठ! मम पुत्र्याः व्याधेः निवारणोपायं सूचयन् भवान् माम् अनुगृह्णातु" इति।

"राजन्! भवतः भक्त्या अहं सन्तुष्टः अस्मि" इति वृक्षकोटरस्थः शिष्योत्तमः गम्भीरस्वरेण उक्तवान्।

"धन्योऽस्मि। महात्मन्! व्याधि-निवारणार्थम् उपायम् अपि सूचयतु कृपया" इति प्रार्थितवान् राजा।

"इतः अनतिदूरे कश्चन प्राचीनदेवालयः अस्ति। तत्र कश्चन संन्यासिवेषधारी मान्त्रिकः उपविष्टः दृश्यते। सः एव मन्त्रप्रयोगेण राजकुमार्यां व्याधिं योजितवान्। अतः विना शब्दं तस्य समीपं गत्वा एकेन एव प्रहारेण स च दुष्टः मारणीयः भवता। एवं कृतं चेत् कार्यस्य अर्धभागः साधितः इव" इति सूचितवान् कोटरस्थः शिष्योत्तमः।

शिष्योत्तमस्य वचनं श्रुतवतः अपूर्वस्य महत् आश्चर्यम्! 'वञ्चनया राजकुमारीं प्राप्तुम् इच्छन्तं सर्पकेतुं वञ्चनया एव मारयितुम् उद्युक्तः एषः वञ्चकगुरोः योग्यः शिष्यः। वञ्चनामार्गस्य चिन्तने उभौ अपि असदृशौ' इति चिन्तितवान् अपूर्वः।

राजा वृक्षं त्रिवारं प्रदक्षिणीकृत्य नमस्कृत्य– "अये दिव्यवृक्ष! भवतः वचनं पालयिष्यामि। अग्रे मया किं करणीयम् इति सूचयतु। व्याधिनिवारणोपायम् अपि सूचयतु कृपया" इति प्रार्थितवान्।

"मया उच्यमानं श्रद्धया श्रुत्वा तदनुगुणं व्यवहरति चेत् इष्टं सेत्स्यति एव। श्वः प्रातः



सूर्योदयसमये पूर्वद्वारसमीपे कश्चन युवकः दृश्यते। सः वामनः स्थूलः श्मश्रुधारी च। तम् अन्तः नीत्वा आदरेण सत्करोतु। सः राजकुमार्याः व्याधिं निवारयिष्यति। व्याधिनिवारणसमर्थाय तस्मै एव राजकुमारी दातव्या अपि। सर्वप्रथमं स च दुष्टः मान्त्रिकः निर्दयं मारणीयः भवता" इति सूचितवान् कोटरस्थः शिष्योत्तमः।

"पुत्र्याः हितार्थम् अहं भवता यथा सूचितं तथा अवश्यं करिष्यामि" इति वदन् राजा पुनरपि वृक्षं भक्त्या नमस्कृतवान्।

"महाराज! तिष्ठतु तावत्। दुष्टस्य वचने मा विश्वसितु भवान्" इति वदन् अधः उत्प्लुतवान् अपूर्वः।

राजा दिग्भ्रान्तः सन् अपूर्वं दृष्टवान्। तावता अपूर्वः समीपस्थं शिलाद्वयम् उन्नीय शिलयोः घर्षणेन स्फुलिङ्गान् उत्पाद्य तृणेषु अग्निं योजितवान्। ज्वलन्ति तृणानि राशीकृत्य कोटरे पातितवान् च।

तदा शिष्योत्तमः– "हा हन्त! मृतोऽहम्। रक्षन्तु माम्" इति उच्चैः आक्रन्दनं कुर्वन् कोटरात् अधः उत्प्लुतवान्।

"गृह्णातु एतम्। राजकुमारीं परिणेतुम् इच्छन् वञ्चकः एषः एव" इति उच्चस्वरेण उक्तवान् अपूर्वः।

भीतः शिष्योत्तमः राज्ञः पादयोः पतितवान्। तावता आक्रन्दनं श्रुत्वा तत्र आगताः राज्ञः अङ्गरक्षकाः तं गृहीत्वा बद्धवन्तः।

"तस्मिन् प्राचीने आलये एतस्य गुरुः वञ्चकः मान्त्रिकः अस्ति। तम् अपि बध्नन्तु। यावत् एतौ आत्मनः अपराधं न अङ्गीकुरुतः तावत् एतौ कारागारे स्थापनीयौ, कठोरं दण्डनीयौ च" इति आज्ञास्वरेण उक्तवान् अपूर्वः।

"एतस्य गुरुः बध्यते, एतौ दण्ड्येते च। किन्तु मम पुत्र्याः व्याधेः निवारणं कथम्?" इति चिन्तायुक्तेन स्वरेण अपूर्वं पृष्टवान् राजा।

"प्रातः तुलसीरसः सायं बिल्वरसः च प्रतिदिनं सेवनीयः राजकुमार्या। एतेन अचिरात् एव सा व्याधितः मुक्ता भविष्यति। शुभं भवतु। पुनः मेलिष्यामि" इति उक्त्वा ततः वेगेन गच्छन् अपूर्वः क्षणाभ्यन्तरे अदृश्यतां गतवान्।

राजा भटैः सह प्राचीनं देवालयं प्राप्तवान्। राज्ञः मुखे क्रोधं दृष्ट्वा एव सर्पकेतुः ज्ञातवान् यत् कापि विपत् उपस्थिता इति। यावत् सः पलायनं कर्तुम् उद्युक्तः तावता राजभटाः वेगेन अग्रे आगत्य तस्य बन्धनं कृतवन्तः। सर्पकेतुः लज्जया शिरः अवनमय्य मौनं स्थितवान्। भटाः तं देवालयस्य पुरतः आकृष्य आनीतवन्तः।

–(अनुवर्तते)






# अन्नदानफलम्

एकवारं वा त्रिविक्रमः जेतव्यः इति चिन्तयन्तम् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि श्मशानम् उद्दिश्य गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं यथापूर्वं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! श्रमशब्दस्य अर्थम् एव अजानन् इव भवान् सदा कार्यमग्नः भवति। अतः आत्मनः श्रमस्य परिहारं न चिन्तयति एव भवान्। आत्मीयेन मया वा भवतः श्रमस्य परिहारार्थम् उपायः चिन्तनीयः खलु? अतः मार्गायासपरिहारार्थम् एकां कथां श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं वराहगिरिनामके ग्रामे विनयभद्रः नाम कश्चन वणिक् आसीत्। सः चतुरमतिः।

वेतालकथा



जनानाम् आकर्षणं कथं करणीयम् इति जानाति स्म सः। अत्याशाम् अप्रदर्शयन् सः प्रामाणिकतया एव वाणिज्यं करोति। अतः सः जनप्रियः जातः। वाणिज्यतः प्रभूतं धनं सम्पादितवान् चापि। विनयभद्रः यद्यपि दैवभक्तः, तथापि दानबुद्धिः सर्वथा नास्ति तस्य।

विनयभद्रस्य गृहे वरदः नाम कश्चन विश्वासार्हः सेवकः आसीत्। सः कदाचित् विनयभद्रं निवेदितवान्– "श्रीमन्, यदि भवान् कोपं न प्रदर्शयेत् तर्हि अहं किञ्चित् निवेदयितुम् इच्छामि" इति।

"किं तत् वक्तुम् इच्छति? निस्सङ्कोचं वदतु तावत्" इति हसन् उक्तवान् विनयभद्रः।

"श्रीमन्! भवतः प्रभूता सम्पत्तिः अस्ति। पुत्रपौत्रादयः न सन्ति। अतः भवता कुतो वा दानादिक्रियया किञ्चित् पुण्यं न सम्पादनीयम्? ऐश्वर्ये स्थिते अपि धर्ममार्गानुयायी भवान् दानादिकं किमर्थं न करोति इत्येव आश्चर्यं मम" इति उक्तवान् वरदः।

तदा विनयभद्रः– "एतावान् एव वा भवता निवेदनीयः विषयः? भवतः समीपे धनं नास्ति इत्यतः भवान् एवं वदति। यदि कश्चित् भवते धनं दद्यात् तर्हि स्वनिमित्तं तस्य उपयोगम् अकृत्वा सर्वम् अपि दानादिषु विनियोक्तुम् अर्हति वा भवान्?" इति पृष्टवान्।

तदा वरदः झटिति उक्तवान्– "अवश्यं तथा करोमि। तत्र सन्देहः एव मास्तु भवतः" इति।

"तर्हि एवं करोतु। अहं भवते शतं रजतनाणकानि दास्यामि। कस्मिंश्चित् दानकार्ये तस्य धनस्य विनियोगं करोतु। किन्तु कुत्रापि मम नाम न प्रकाशनीयम्। एतत् कदापि मा विस्मरतु" इति उक्त्वा विनयभद्रः वरदाय शतं रजतनाणकानि दत्तवान्।

स च ग्रीष्मकालः। वरदः विनयभद्रेण दत्तस्य धनस्य साहाय्येन प्रमुखमार्गाणां पार्श्वे प्रपास्थानानि निर्मितवान्। आतपेन पीडिताः

यात्रिकाः भारवाहकाः च शीतलं जलं प्राप्य तृप्तिं प्रकटयन्तः वरदस्य दानगुणं प्रशंसितवन्तः।

वरदः प्रामाणिकबुद्ध्या परोपकारार्थं प्रवृत्तः यत् तत् दृष्ट्वा नितरां सन्तुष्टः विनयभद्रः।

केषाञ्चन दिनानाम् अनन्तरं वार्तालापमध्ये वरदः विनयभद्रम् उक्तवान्– "यदि मम समीपे धनं स्यात् तर्हि ग्रामे समीचीनायाः धर्मशालायाः निर्माणं कुर्याम्" इति।

तदा विनयभद्रः– "तर्हि तदर्थं धनम् अहं ददामि। मम नाम अप्रकटयन् यथा योग्यं तथा करोतु" इति उक्त्वा वरदाय प्रभूतं धनं दत्तवान्।

ततः मासत्रयाभ्यन्तरे वरदः ग्रामे समीचीनां धर्मशालां निर्मितवान्। प्रयाणिकाः निर्धनाः च तत्र आश्रयं प्राप्य तृप्तिं प्रकटयन्ति स्म। धर्मशालायां भोजनं न लभ्यते चेदपि वसतिः तु लभ्यते स्म एव। अतः अल्पे एव काले तस्याः नाम 'वरदधर्मशाला' इत्येव प्रसिद्धं जातम्।

पुनः कश्चन कालः अतीतः। वरदः विनयभद्रं कदाचित् उक्तवान्– "बहवः निर्गतिकाः अन्नाभावतः क्लेशम् अनुभवन्तः सन्ति। एतत् दृष्ट्वा खेदम् अनुभवामि अहम्। किं करवाणि? मम हस्ते धनं नास्ति। यदि धनं स्यात् तर्हि किमपि कुर्याम्। हुँ,



सर्वोऽपि भिक्षुकस्य स्वप्नः...." इति।

"यदि धनं स्यात् तर्हि किम् अकरिष्यत्?" इति पृष्टवान् विनयभद्रः।

"प्रतिदिनम् अन्नदानव्यवस्थाम् अकरिष्यम्" इति उक्त्वा सुदीर्घं निःश्वसितवान् वरदः।

विनयभद्रः क्षणकालम् आलोच्य– "यावत् अहं जीवामि तावत् एतदर्थं धनं दद्याम्। किन्तु एतादृशं महान्तं भारं वोढुं भवान् शक्नुयात् वा न वा इत्येव सन्देहः मम" इति उक्तवान्।

"श्रीमन्! सत्कार्यं कोऽपि भाराय न भावयति। तथैव अहम् अपि। कार्यसाधनार्थं दृढा सङ्कल्पशक्तिः आवश्यकी। सङ्कल्पदृढता अस्ति चेत् मानवेन साधयितुम्

यात्रिकाः भारवाहकाः च शीतलं जलं प्राप्य तृप्तिं प्रकटयन्तः वरदस्य दानगुणं प्रशंसितवन्तः।

वरदः प्रामाणिकबुद्ध्या परोपकारार्थं प्रवृत्तः यत् तत् दृष्ट्वा नितरां सन्तुष्टः विनयभद्रः।

केषाञ्चन दिनानाम् अनन्तरं वार्तालापमध्ये वरदः विनयभद्रम् उक्तवान्– "यदि मम समीपे धनं स्यात् तर्हि ग्रामे समीचीनायाः धर्मशालायाः निर्माणं कुर्याम्" इति।

तदा विनयभद्रः– "तर्हि तदर्थं धनम् अहं ददामि। मम नाम अप्रकटयन् यथा योग्यं तथा करोतु" इति उक्त्वा वरदाय प्रभूतं धनं दत्तवान्।

ततः मासत्रयाभ्यन्तरे वरदः ग्रामे समीचीनां धर्मशालां निर्मितवान्। प्रयाणिकाः निर्धनाः च तत्र आश्रयं प्राप्य तृप्तिं प्रकटयन्ति स्म। धर्मशालायां भोजनं न लभ्यते चेदपि वसतिः तु लभ्यते स्म एव। अतः अल्पे एव काले तस्याः नाम 'वरदधर्मशाला' इत्येव प्रसिद्धं जातम्।

पुनः कश्चन कालः अतीतः। वरदः विनयभद्रं कदाचित् उक्तवान्– "बहवः निर्गतिकाः अन्नाभावतः क्लेशम् अनुभवन्तः सन्ति। एतत् दृष्ट्वा खेदम् अनुभवामि अहम्। किं करवाणि? मम हस्ते धनं नास्ति। यदि धनं स्यात् तर्हि किमपि कुर्याम्। हुँ,



सर्वोऽपि भिक्षुकस्य स्वप्नः...." इति।

"यदि धनं स्यात् तर्हि किम् अकरिष्यत्?" इति पृष्टवान् विनयभद्रः।

"प्रतिदिनम् अन्नदानव्यवस्थाम् अकरिष्यम्" इति उक्त्वा सुदीर्घं निःश्वसितवान् वरदः।

विनयभद्रः क्षणकालम् आलोच्य– "यावत् अहं जीवामि तावत् एतदर्थं धनं दद्याम्। किन्तु एतादृशं महान्तं भारं वोढुं भवान् शक्नुयात् वा न वा इत्येव सन्देहः मम" इति उक्तवान्।

"श्रीमन्! सत्कार्यं कोऽपि भाराय न भावयति। तथैव अहम् अपि। कार्यसाधनार्थं दृढा सङ्कल्पशक्तिः आवश्यकी। सङ्कल्पदृढता अस्ति चेत् मानवेन साधयितुम्



अशक्यं किमपि नास्ति एव'' इति उक्तवान् वरदः।

विनयभद्रः वरदाय धनं दत्तवान्। वरदेन अन्नदानव्यवस्था आरब्धा। समग्रं व्ययं विनयभद्रः एव निर्वहति स्म। दूरात् आगताः प्रयाणिकाः निर्धनाः च भोजनं कृत्वा तृप्तिं प्रकटयन्तः– ''वरदः धर्मात्मा। भगवान् एतं दीर्घायुष्येण अनुगृह्णातु'' इति वदन्ति स्म। एतादृशानि वचनानि श्रुत्वा तृप्तिं प्राप्नोति वरदः।

एवम् एव केचन मासाः अतीताः। कदाचित् हृदयस्तम्भनकारणतः विनयभद्रः प्राणान् अत्यजत्। तस्य उत्तराधिकारी कोऽपि नास्ति इत्यतः तदीया सम्पत्तिः राजाधीना जाता।

विनयभद्रस्य मरणतः वरदः कुतश्चित् अपि धनं न प्राप्नोति। अतः सः अन्नदानव्यवस्थां स्थगितवान्। ''मम समीपे यावत् धनम् आसीत् तावत् समाप्तम्। अतः अन्नदानव्यवस्था मया स्थगिता'' इति जनान् उक्तवान् सः। जनाः तस्य वचनेषु न विश्वसन्ति।

'कृपणताकारणतः वरदः धनव्ययं कुर्वन् नास्ति' इति ते तं तर्जितवन्तः। केचन तु बुभुक्षाकारणतः क्रोधं प्राप्य तं सम्यक् ताडितवन्तः। ताडनकारणतः वरदस्य हस्तः पादः च भग्नौ। द्वित्रेषु दिनेषु वेदनाम् असहमानः वरदः मृतः अभवत्।

वेतालः एवं कथां समाप्य अवदत्– ''अये राजन्! वरदस्य दुर्मरणस्य कारणं कः? विनयभद्रः, उत अन्नाभावतः क्रुद्धाः जनाः? अथवा तस्य मरणस्य अन्यत् एव कारणं स्यात् वा? मम एतस्य सन्देहस्य योग्यम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''विनयभद्रः वृत्तिं पवित्रां भावयति स्म। वृत्तौ एव देवं पश्यति स्म। वृत्तिविषये महती श्रद्धा तस्य। अतः तेन धनं सम्यक् सम्पादितम्। वरदः यदा सत्कार्यस्य प्रस्तावं कृतवान् तदा सन्तोषेण तस्मै धनं दत्तवान् विनयभद्रः। विनयभद्रस्य स्वार्थभावना कीर्तिकामना वा सर्वथा न

आसीत्। अतः सः स्वनाम्नः प्रकाशनं न इष्टवान्। वरदः कीर्तिं प्राप्नुवन् अस्ति इति ज्ञात्वा अपि सः असूयां न प्राप्तवान्। स्वामिना दीयमानस्य धनस्य सद्विनियोगः सेवकस्य वरदस्य एव दायित्वम् आसीत्। यात्रिकाणां, विकलाङ्गानां, वृद्धानां च निमित्तं यदि अन्नदानस्य व्यवस्थां क्रियेत तर्हि तत्र औचित्यम् अस्ति। एतादृशं कार्यम् अवश्यं करणीयम् अपि। अतः एव विनयभद्रः वरदाय अन्नदानव्यवस्थार्थं धनं दत्तवान्। किन्तु वरदः पात्रापात्रविवेचनम् अकृत्वा अन्नदानं कृतवान्। अतः अलसाः अपि एतस्य लाभं प्राप्तवन्तः। विनायासम् अन्नं लभ्यते इत्यतः तेषाम् आलस्यं प्रवृद्धम्। तेषां बुद्धौ अपि कालुष्यम् आगतम्। आरम्भे तु वरदेन व्यवस्थापितस्य अन्नदानस्य बलेन ते जीवितवन्तः। अन्ते ते भावितवन्तः यत् अस्माकं पोषणं वरदस्य कर्तव्यम् इति। अतः एव, यदा अन्नदानं स्थगितं तदा ते मिथ्यारोपं कृत्वा क्रोधेन वरदं सम्यक् ताडयन्तः मारितवन्तः एव। एवं वरदं अलसाः जनाः मारितवन्तः इति आपाततः दृश्यते। वस्तुतस्तु एतस्य मरणस्य कारणं स्वयं वरदः एव। दृढकायेभ्यः अलसेभ्यः भोजनं न दातव्यम् आसीत्। दत्तं चेदपि ते कार्येषु योजनीयाः आसन्। तादृशं किमपि न कृतं वरदेन। अतः तेषां दुर्मार्गगमनस्य प्रेरकः स्वयं वरदः एव जातः। एवं सम्भवेत् इति जानन् विनयभद्रः आरम्भे एव उक्तवान् आसीत्—महान् भारः भवता निर्वोढुं शक्यः वा? इति। वरदस्य तु विवेकः न्यूनः। अतः सः फलम् अविचिन्त्य कार्यं कृतवान्। सर्पाः इव स्थितान् दुष्टान् पोषितवान् सः। स्वयंकृतापराधस्य फलम् अपि अनुभुक्तवान्। एवं वरदस्य मरणस्य कारणं न अन्यः, अपि तु स्वयं सः एव" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।





# विशिष्टं कङ्कणम्

अलकापुरे तुलाधरः नाम कश्चित् कुसीदवाणिज्येन जीवनं करोति स्म। अलकापुरीयाः बहवः तदा तदा तस्य साहाय्यं प्राप्नुवन्ति स्म। आभरणानि अन्यविधानि अमूल्यानि वस्तूनि वा आधिरूपेण स्थापयित्वा तुलाधरतः धनं नयन्ति स्म। आधिम् अस्वीकृत्य तु कस्मैचित् अपि किमपि न ददाति तुलाधरः।

वेणुगोपालः कश्चन सामान्यः कृषिकः। सः तदा तदा तुलाधरतः ऋणं प्राप्नोति। कृषिकार्यार्थं कुटुम्बपोषणार्थं वा तेन तथा ऋणं स्वीक्रियते स्म। यदा यदा ऋणम् आवश्यकं भवति तदा सः स्वगृहे स्थितं कङ्कणम् आधिरूपेण तुलाधराय ददाति। अल्पे एव काले वृद्धिसहितम् ऋणं प्रत्यर्प्य कङ्कणं प्रतिस्वीकरोति च। एषः क्रमः बहोः कालतः अनुवर्तते।

कदाचित् वेणुगोपालः ऋणं प्राप्तुं तुलाधरसमीपम् आगतवान्। तत्समये अभिरामः नाम स्वर्णकारः तत्र आसीत्। 'शतं रूप्यकाणि ऋणरूपेण आवश्यकानि' इति वदन् वेणुगोपालः तत् कङ्कणं तुलाधरस्य पुरतः स्थापितवान्। तुलाधरः तत् कङ्कणम् अपरीक्ष्य एव पार्श्वे स्थापयित्वा शतं रूप्यकाणि दत्त्वा वेणुगोपालं प्रेषितवान्।

वेणुगोपालेन दत्तं कङ्कणं परीक्षादृष्ट्या परिशीलितवान् अभिरामः। दर्शनमात्रेण तेन ज्ञातं यत् एतत् कङ्कणं सुवर्णमयं न, अपि तु सुवर्णरसलिप्तम् इति। तस्य कङ्कणस्य मूल्यं विंशतिः रूप्यकाणि भवितुम् अर्हति, तावदेव।

'विचिन्त्य एव व्यवहारं करोति तुलाधरः इति ख्यातिः अस्ति ग्रामे। किन्तु एतस्य व्यवहारात् ज्ञायते यत् एषः वास्तविकं सुवर्णं किं, कृत्रिमं च किम् इति न जानाति एव। कृत्रिमम् एव वास्तविकं भावयति' इति

"भामहः"

आलोच्य अभिरामः स्वकीयं व्यवहारं समाप्य ततः निर्गतवान्।

ततः एकस्य मासस्य अनन्तरम् अभिरामः सुवर्णवर्णलिप्तानि पञ्चषाणि आभरणानि सज्जीकृत्य तानि तुलाधराय यच्छन् उक्तवान्– "श्रीमन्, मम पुत्र्याः विवाहः निश्चितः अस्ति। वरः उत्तमः। विवाहार्थं यावत् आवश्यकं तावत् धनं मम समीपे नास्ति। अन्यच्च अहं स्वकीयस्य आपणस्य निर्माणे उद्युक्तः अस्मि। अतः इदानीं सहस्रं रूप्यकाणि आवश्यकानि। एतानि आभरणानि आधिरूपेण स्वीकृत्य कृपया सहस्रं रूप्यकाणि ददातु। षण्मासाभ्यन्तरे भवदीयम् ऋणं वृद्धिसहितं प्रत्यर्प्य एतानि आभरणानि नेष्यामि। वस्तुतः आभरणानि आधिरूपेण स्थापयितुं मम इच्छा नास्ति। किन्तु कष्टमयी परिस्थितिः उपस्थिता अस्ति। अतः आभरणानि आधिरूपेण स्वीकरोतु। ऋणरूपेण सहस्रं रूप्यकाणि ददातु च" इति।

तुलाधरः अभिरामेण दत्तानि आभरणानि परीक्ष्य– "श्रीमन्, आभरणानां निर्माणेन विक्रयणेन च जीवति खलु भवान्? एतादृशः भवान् आभरणानां योग्यतां न जानाति इति भावयामि वा?" इति पृष्टवान्।

"भवतः कथनस्य आशयः न ज्ञातः मया" इति, किमपि अजानन् इव उक्तवान् अभिरामः।



तदा तुलाधरः हसन्– "एतानि कृत्रिमानि आभरणानि। विवाहसमये भवान् यदि एतादृशानि आभरणानि पुत्र्यै दद्यात् तर्हि वरपक्षीयाः भवन्तं निन्दन्तः भवत्पुत्रीं प्रतिप्रेषयेयुः। तदस्तु, यानि आभरणानि भवता दत्तानि तानि आधिरूपेण स्वीकृत्य चतुःशतं रूप्यकाणि दातुं शक्यन्ते, न तु ततोऽपि अधिकानि" इति उक्तवान्।

तदा अभिरामः– "श्रीमन्, एतानि सुवर्णाभरणानि इति मया न उक्तानि। एतानि स्वीकृत्य ऋणं ददातु इति एतावत् एव उक्तम्। भवान् एतादृशम् एव एकं कङ्कणं स्वीकृत्य वेणुगोपालाय शतं रूप्यकाणि दत्तवान्। तावता एव प्रमाणेन मह्यं किमर्थं

धनं न ददाति?" इति पृष्टवान्।

तुलाधरः क्षणकालम् आलोच्य– "इदानीं स्मृतं मया। केभ्यश्चित् दिनेभ्यः पूर्वं वेणुगोपालेन ऋणं स्वीकृत्य यदा गतं तदा भवान् अत्र आसीत् खलु? तस्मिन् दिने भवता तच्च कङ्कणं परीक्षितं स्यात् खलु?" इति उक्तवान्।

"आम्" इति उक्तवान् अभिरामः।

तदा तुलाधरः उक्तवान्– "वेणुगोपालेन दत्तं कङ्कणं सुवर्णनिर्मितं न, अपि तु सुवर्णद्रवलिप्तम् इति अहं तदा एव जानामि स्म" इति।

"तर्हि जानन् अपि भवान् किमर्थं वेणुगोपालाय तावत् धनं दत्तवान्?" इति कुतूहलेन पृष्टवान् अभिरामः।

"वेणुगोपालस्य व्यवहारे किञ्चित् वैशिष्ट्यम् अस्ति। वेणुगोपालः प्रामाणिकः। अन्यच्च बाल्यतः अपि आवयोः महती मैत्री। ततः आधिरूपेण किमपि अस्वीकृत्य एव तस्मै धनं दातव्यम् इति मम इच्छा। किन्तु सः तादृशं व्यवहारं न इच्छति। पित्रार्जितम् एकं कङ्कणं तस्य हस्ते अस्ति। तदेव कङ्कणं सः आधिरूपेण स्थापयति सदापि" इति उक्तवान् तुलाधरः।

"तच्च कङ्कणं सुवर्णनिर्मितं न इति तं किमर्थं न वदति भवान्?" इति पृष्टवान् अभिरामः।

"किन्तु किं तेन? यदि अहं 'तत् सुवर्णमयं न' इति वदेयं तर्हि सः सङ्कोचवशात् मत्तः ऋणं प्राप्तुम् एव न आगच्छेत्। धनाभावतः जीवने क्लेशं च अनुभवेत्। आत्मीयस्य तस्य कष्टं द्रष्टुम् अहं न इच्छामि। अतः कङ्कणं स्वीकरोमि। सः यावत् इच्छति तावत् ऋणं ददामि च। तत् कङ्कणं पित्रार्जितम् इत्यतः तद्विषये महत् गौरवं वेणुगोपालस्य" इति उक्तवान् तुलाधरः।

वेणुगोपालविषये तुलाधरस्य यः अभिमानः अस्ति तं दृष्ट्वा आश्चर्यम् अनुभवन् अभिरामः आत्मना आनीतानि आभरणानि स्वीकृत्य मौनं प्रतिगतवान्।



# महात्मभिः दृष्टं भारतम्

## देशसेवा ईशसेवा

'नेताजी' इति जनैः साभिमानम् आहूतः सुभाश्चन्द्र बोस् १८९७ तमे वर्षे जुलैमासे जन्म प्राप्तवान् आसीत्। १९२० तमे वर्षे सः ऐ.सि.एस्. परीक्षाम् उत्तीर्णः। विदेशात् आगतः सः सर्वकारीयम् उद्योगं प्राप्तुं न इष्टवान्, अपि तु भारतराष्ट्रियकांग्रेस्संस्थायाः कार्येषु उद्युक्तः जातः। सुभाश्चन्द्रस्य राष्ट्राभिमानस्य उग्रतां दृष्ट्वा भीतेन आंग्लसर्वकारेण सः गृहबन्धने स्थापितः। तथापि सुभाश्चन्द्रवर्यः १९४१ तमे वर्षे कथमपि बन्धनात् आत्मानं विमोच्य काबूल् गत्वा ततः जर्मन्देशं प्राप्तवान्। मलयाद्वीपसमूहे तेन 'अजाद् हिन्द् फौज्' कार्यम् आरब्धम्। तत्समये सः युवजनताम् उद्दिश्य एवम् उक्तवान् आसीत्—

"देशसेवाम् ईशसेवां मन्यमानैः युवक-युवतीभिः देशसेवाकार्ये उद्युक्तैः भवितव्यम्। भारतमातुः करुणक्रन्दनं न श्रूयते भवद्भिः? इदानीम् अपि तन्द्रामग्नता न उचिता। भोः युवकयुवतयः! उत्तिष्ठन्तु, कार्यरङ्गं प्रविशन्तु। अष्टादशे शतके वाणिज्यव्याजेन आगतवद्भ्यः विदेशीयेभ्यः अनुमतिं यच्छद्भिः अस्माकं पूर्वजैः यत् पापं सञ्चितं तत् इदानीं प्रक्षालनीयम्। जाग्रदवस्थाम् आपन्ना भारतीयता अस्मान् अभ्युदयेन योजयितुम् इच्छन्ती सेवार्थम् आह्वयति। अतः भारतीयैः युवकैः स्वातन्त्र्यकार्ये उत्साहेन भागः ग्रहीतव्यः। नष्टप्रायं प्राचीनवैभवं पुनरपि उज्जीव्य उन्नतस्थानं प्रापणीयम् अस्ति इदानीम्" इति।

## भवन्तः जानन्ति वा?

१. मेट्रिक्मापनपद्धतिः सर्वप्रथमं केन देशेन अनुसृता?
२. अलेक्साण्डर्चक्रवर्तिने बाल्ये एकः अश्वः दत्तः आसीत्। तस्य अश्वस्य नाम किम्?
३. 'जूडो' नामिका नियुद्धपद्धतिः केन रूपिता? तच्च कदा?
४. आरोग्यमूल्याङ्काः केन देशेन प्रकटिताः? तेषां मूल्याङ्कानां वैशिष्ट्यं किम्?

(उत्तराणि ३६तमे पृष्ठे)



# प्रभुः श्रीरामचन्द्रः

महाविष्णुः श्रीरामचन्द्ररूपेण भूलोकम् अवतीर्य रावणं संहृत्य लोकोपकारं यत् कृतवान् सा च कथा रामायणे निरूपिता अस्ति। रामायणकथाम् अजानन् कश्चित् भारते न स्यात्। अद्वितीयं रामचरितं ग्रन्थरूपेण निरूपितवन्तम् आदिकविं वाल्मीकिम् अद्यापि कृतज्ञतापूर्वकं स्मरति लोकः।

महाविष्णोः सप्तमः अवतारः श्रीरामः। श्रीरामः उच्चतमेन आचरणेन इदानीम् अपि भारतीयानाम् आदर्शः अस्ति। बाल्यात् अपि तेन मातापितरौ अन्ये गुरुजनाश्च आदरेण दृष्टाः। दुष्टानां निवारणे तस्य बाहू स्फुरतः स्म। शिष्टानां रक्षणे तस्य हृदयं त्वरते स्म। पितृवाक्यपरिपालनार्थं सः विना खेदम् अरण्यं गच्छन् सुदीर्घं वनवासम् आचरितवान्। रामलक्ष्मणयोः भ्रातृवात्सल्यं, सीतारामयोः परस्परानुरागः इत्यादयः अद्यापि लोके

आदर्शभूताः सन्ति।

सामान्यानां कपीनां साहाय्येन देवान् अपि निगृहीतवन्तं चक्राधिपतिं प्रबलं रावणं जितवान् धीरः श्रीरामः। असदृशः रामबाणः अद्यापि अद्वितीयः एव तिष्ठति।

रामस्य शासनकाले प्रजाभिप्रायस्य विशिष्टं स्थानम् आसीत्। आराधनाय लोकस्य सर्वस्वम् अपि त्यक्तुं सिद्धः आसीत् रामः। अतः एव उत्तमोत्तमं राज्यं रामराज्यम् इति उच्यते। सीता-लक्ष्मण-भरत-शत्रुघ्न-हनूमत्समेतः श्रीरामः आ सेतोः आहिमाचलं समानादरभावेन पूज्यते जनैः।

# र स वा र्ताः

## वेगेन वलति पीसाभवनम्

लोकविख्यातं पीसाभवनम् एषु दिनेषु वेगेन वलत् अस्ति इति एतद्भवनपरिशीलकौ अध्यापकौ सप्रमाणं वदतः। एतौ एतत् भवनम् आमूलम् आशिखरं सद्यः परिशीलयतः। १९१८ तमवर्षात् एतत् भवनं प्रतिवर्षं १.१९ मि.मी. यावत् वलति स्म। किन्तु एतस्य वर्षस्य त्रिषु मासेषु एव एतेन १.१ मि.मी. वलितं दृष्टम्। एतावता एतत् भवनं ८ मीटर् (१२ द्वादशाङ्गुलं) यावत् वलितं स्यात् इति परिशीलकाः वदन्ति।।




## जगद्विख्यातः भारतीयः विज्ञानी




द्रवस्फटिकविषये (लिक्विड् क्रिस्टल्) विशेषतः संशोधनं कृत्वा समग्रे प्रपञ्चे ख्यातिं गतः डा. चन्द्रशेखरः जूनमासे एकषष्टितमे वर्षे पदं स्थापितवान्। एतस्य षष्ट्यब्दपूर्तेः स्मरणार्थम् अमेरिकादेशीयया 'मासाचुसैट्स् इन्स्टिट्यूट् आफ् टेक्नालजी' नामिकया संस्थया काचित् सभा आयोजिता आसीत्। एतस्यां सभायां देशविदेशेभ्यः समागताः शताधिकाः विख्याताः विज्ञानिनः उपस्थिताः आसन्।

# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. मनुष्याणाम् इव बुद्धिमत्ता धैर्यं च विशिष्टजातौ जातानाम् अश्वानाम् अपि, आसीत् इति कश्चन आंग्लग्रन्थः निरूपयति। तस्य ग्रन्थस्य नाम किम्?

२. जपानदेशीयस्य अतिप्राचीनग्रन्थस्य नाम किम्?

३. वैमानिकवृत्त्या जीवन् कश्चित् अनन्तरकाले प्रसिद्धः ग्रन्थकर्ता जातः। तस्य नाम किम्? प्रसिद्धस्य तदीयग्रन्थस्य च नाम किम्?

४. सुप्रसिद्धौ आंग्लकवी समाने वर्षे जन्म प्राप्तवन्तौ। तयोः नाम किम्? कस्मिन् वर्षे जातौ तौ?

५. टागोर्वर्यस्य गीताञ्जलिः १९१३ तमे वर्षे इंग्लेण्डदेशे प्रकटितः अभवत्। तदा तस्य प्रास्ताविकं केन लिखितम् आसीत्?

# उत्तराणि

## सामान्यज्ञानम्

१. फ्रान्स्देशेन।

२. बूस्फलस् इति।

३. डा. जिगोरोकानोवर्येण। १८८२ तमे वर्षे।

४. न्यूजील्याण्ड्देशेन। एते मूल्याङ्काः निश्चितात् अपि अधिकेन मूल्येन विक्रीयन्ते। एवं प्राप्तं धनं निर्धनानां बालानां च चिकित्साव्यवस्थां निर्वहन्तीभ्यः सेवासंस्थाभ्यः दीयते च।

## साहित्यज्ञानम्

१. 'गलिवर्स् ट्रावल्स्' इति।

२. कोजिकिक् इति। पुराणकालतः आरभ्य क्रि.श. ६०० वर्षाणि यावत् प्रवृत्ताः जपान्देशीयाः घटनाः निरूपयति एषः ग्रन्थः।

३. अण्टोनिसेण्ट् एक्सूपेरी इति। 'विण्ड्, स्याण्ड् एण्ड् स्टार्स्' इति।

४. लार्ड् टेन्निसन्, एड्गर् अलन् पो इति। १८०९ तमे वर्षे।

५. डब्ल्यू.बि. यीट्स्वर्येण।



प्रपञ्चपुराणगाथावली–५

# सज्जनौ वृद्धदम्पती

सुन्दरे कस्मिंश्चित् पर्वतप्रदेशे कश्चन ग्रामः आसीत्। यत्र ग्रामः दृश्यते तत्र पूर्वं कश्चन तडागः आसीत्। तडागः यदा शुष्कः जातः तदा ग्रामः तत्र निर्मितः। सौभाग्यवशात् तस्मिन् ग्रामे फलोपचयः अत्युत्तमः आसीत्।

तस्मिन् ग्रामे फिलेमनः नाम कश्चन वृद्धः निवसति स्म। तस्य पत्न्याः नाम बांसी। तौ यद्यपि निर्धनौ, तथापि परिश्रमेण द्राक्षालताः वर्धयतः स्म। तस्य विक्रयणात् यावत् प्राप्यते तेन तयोः उदरपोषणं तु भविष्यति, किन्तु किञ्चिदपि धनं न अवशिष्यते। एवं स्थिते अपि तौ निश्चिन्ततया एव दिनानि यापयतः।





कदाचित् तौ दम्पती शुनकानां भषणं, बालानां कोलाहलं च श्रुतवन्तौ। तस्य ग्रामस्य जनानां प्रवृत्तिः एवम् आसीत् यत् कोऽपि नूतनः तं ग्रामम् आगच्छति चेत् ते तम् उद्दिश्य शुनकान् प्रेरयन्ति स्म, बालकान् अपि तस्य पीडने प्रेरयन्ति स्म। एषः एव व्यवहारः इदानीं प्रचलन् अस्ति इति ज्ञातवन्तौ तौ दम्पती।



वृद्धौ दम्पती गृहात् बहिः आगतवन्तौ। तदा शुनकैः बालैः च पीड्यमानौ द्वौ यात्रिकौ अनतिदूरे ताभ्यां दृष्टौ। तौ प्रयाणिकौ स्वगृहं नीतवन्तौ एतौ दम्पती। "किमर्थम् एतद्ग्रामीणाः स्वपुत्रान् एवं दुर्व्यवहारे प्रेरयन्ति? अतः एव अन्यप्रदेशतः कोऽपि एतं ग्रामं न आगच्छति" इति उक्तवन्तौ तौ यात्रिकौ।

वृद्धौ दम्पती स्वखादनार्थं स्थापिताम् एकमात्रां रोटिकां विभज्य ताभ्यां दत्तवन्तौ। बांसी विद्यमानम् अल्पं क्षीरम् एव चषके किञ्चित् किञ्चित् स्थापयित्वा दत्तवती। क्षीरं पीत्वा तौ उक्तवन्तौ– "क्षीरं रुचिकरम् आसीत्। इतोऽपि किञ्चित् प्राप्येत वा?" इति।





अन्तः अल्पम् अपि क्षीरं नास्ति। अतः बांसी लज्जया तौ उक्तवती– "क्षन्तव्याः वयम्। क्षीरं किञ्चित् अपि न अवशिष्टम्" इति। तदा तयोः अन्यतरः यात्रिकः हसन् उक्तवान्– "बिन्दुमात्रम् अस्ति चेदपि पर्याप्तम्। अतः तावत् वा अस्ति वा इति पश्यतु" इति। बांसी दीर्घं निःश्वसती अन्तः गत्वा दृष्टवती। आश्चर्यं नाम पात्रे चषकद्वयमितं क्षीरं दृश्यते।

"एतत् क्षीरं भवन्तौ पिबताम्। पात्रे सदापि किञ्चित् क्षीरम् अवशिष्यते एव" इति उक्तवान् एकः यात्रिकः। तौ दम्पती क्षीरं पीतवन्तौ। तत् सुमधुरम् आसीत्। रोटिकायाः परिस्थितिः अपि एवम् एव। यावत् स्वीकृतं चेदपि ततः रोटिकाः प्राप्यन्ते। मूलरोटिका तु तथैव अवशिष्यते।





तौ यात्रिकौ तस्यां रात्रौ तस्मिन् कुटीरे एव शयनं कृतवन्तौ। प्रातः तौ ततः प्रस्थितवन्तौ। तयोः प्रेषणार्थं वृद्धौ दम्पती ताभ्यां सह ग्रामसीमापर्यन्तं गतवन्तौ।

ग्रामसीमाम् अतिक्रम्य ते सर्वे सकृत् परिवृत्य ग्रामं दृष्टवन्तः। अहो आश्चर्यम्! इदानीं तत्र ग्रामः न दृश्यते, अपि तु काचित् पर्वतनिर्झरिणी दृश्यते! वृद्धौ दम्पती आश्चर्यचकितौ जातौ। तदा यात्रिकयोः अन्यतरः उक्तवान्– "एते दुष्टाः एतस्मिन् सुन्दरे पर्वतप्रदेशे निवासं कर्तुम् अनर्हाः आसन्। अतः ग्रामः निर्झरिणीरूपेण परिवृत्तः। जनाश्च मीनरूपेण परिवृत्ताः" इति।





"इदानीं भवन्तौ परिवृत्य पश्यताम्" इति सूचितवान् अपरः यात्रिकः। वृद्धदम्पती पुनः परिवृत्य दृष्टवन्तौ। पूर्वं तयोः कुटीरं यत्र आसीत् तत्र इदानीं विशालः सुन्दरः प्रासादः दृश्यते! "भवन्तौ यात्रिकाणां सेवां कुरुतः। आश्रयदानार्थं विशालं गृहम् आवश्यकं खलु? अतः एतत् सृष्टम्" इति उक्तवन्तौ तौ। वृद्धौ दम्पती कृतज्ञतापूर्वकं तौ नमस्कृतवन्तौ। अनन्तरक्षणे एव तौ यात्रिकौ अदृश्यतां गतवन्तौ।

तस्मात् दिनतः तौ वृद्धदम्पती अक्षय्यात् क्षीरपात्रात् यथेष्टं क्षीरं प्राप्नुवन्तौ अतिथिसत्कारं कर्तुम् आरब्धवन्तौ। तयोः गृहं परितः स्थिते उद्याने मधुराणि फलानि वर्धन्ते। तानि अपि अतिथिभ्यः प्रीत्या यच्छतः तौ।





गच्छता कालेन तां निर्झरिणीं परितः नूतनः ग्रामः निर्मितः अभवत्। तद्ग्रामीणाः वृद्धदम्पती प्रीत्या पश्यतः। पूर्वं ये ग्रामेषु निवसन्ति स्म ते एव मीनरूपं प्राप्तवन्तः सन्ति इति जानन्तः नूतनग्रामीणाः निर्झरिण्यां स्थितान् मीनान् न खादन्ति। तान् मीनान् जुगुप्सया पश्यन्ति ते। कालान्तरे फिलेमनः बांसी च अदृश्यौ जातौ। तत्स्थले सिन्धूरवृक्षः निम्बवृक्षः च प्रवृद्धौ। तौ वृक्षौ अद्यापि छायादानेन आश्रितानां सेवां कुरुतः।



# दयागुणः

अभिरामपुरे लक्ष्मीपतिः नाम कश्चन धनिकः निवसति स्म। अल्पे एव काले सः कोटीश्वरः जातः। मादृशः अन्यः कोऽपि नास्ति लोके इति गर्वः अपि आसीत् तस्य।

कदाचित् दयानिधिः नाम कश्चन बन्धुः लक्ष्मीपतेः गृहम् आगतवान्। दयानिधिः न धनवान्। किन्तु तस्य नाम सर्वे जानन्ति स्म। तस्य कीर्तिः सर्वत्र प्रसृता आसीत्। 'तादृशः कीर्तिमान् दयानिधिः लक्ष्मीपतेः गृहम् आगतः अस्ति' इति जानन्तः जनाः अहमहमिकया लक्ष्मीपतेः गृहम् आगतवन्तः।

एतत् दृष्टवतः लक्ष्मीपतेः मनसि असूया उत्पन्ना। सः दयानिधिं पृष्टवान्– "भोः, भवति कः विशेषगुणः अस्ति इति न ज्ञातं मया। जनाः किमर्थं भवतः दर्शनार्थम् एवम् उत्साहं प्रदर्शयन्ति?" इति।

"मयि विशेषगुणः कोऽपि नास्ति। यदा जनाः कामपि समस्यां मम पुरतः उपस्थापयन्ति तदा अहं यथामति उत्तरं वदामि। अतः एव जनाः एवं मम समीपम् आगच्छन्ति" इति उक्तवान् दयानिधिः।

"तर्हि भवान् ज्योतिश्शास्त्रं किमपि जानाति वा?" इति पृष्टवान् लक्ष्मीपतिः।

"न खलु? अनुभवबलात्, मनसः पक्त्वताकारणतः च उत्तरं वदामि। तत् फलकारि भविष्यति" इति उक्तवान् दयानिधिः।

"कथम् एतत्?" इति कुतूहलेन पृष्टवान् लक्ष्मीपतिः।

"एकम् उदाहरणं परिशीलयाम। धनं श्रेष्ठम्, उत गुणः इति भवान् पृच्छति इति भावयाम। तदा अहम् उत्तरं वदेयं– गुणः एव श्रेष्ठः इति" इति उक्तवान् दयानिधिः।

"अत्र कः आधारः?" इति पृष्टवान्




लक्ष्मीपतिः।

"लोके धनसम्पादनं सुकरम्। किन्तु यः धनवान् भवति सः स्वार्थी भवति। सः सुखेन जीवति चेदपि जनानाम् आदरं तु न प्राप्नोति। किन्तु गुणवतः तु एतद्विपरीतः व्यवहारः। गुणवान् धनिकः न भवेत्। तथापि तस्मिन् जनानाम् आदरः अधिकः। अन्यस्य कष्टं दृष्ट्वा गुणवतः हृदयं द्रवति। उदाहरणरूपेण माम् एव पश्यतु। दयागुणकारणतः मम ऐश्वर्यं नष्टम्। तथापि जनाः मयि विशेषादरं प्रकटयन्ति। अतः एव दयागुणस्य महत्त्वं सर्वत्र वदन् सञ्चारं कुर्वन् अस्मि। जनेषु दयागुणः जागरणीयः इति मम उद्देशः। तदस्तु, मम दर्शनार्थं भवतः गृहं बहवः आगच्छन्ति। तेन भवतः पीडा तु न भवेत् खलु?" इति उक्तवान् दयानिधिः।

"न काऽपि पीडा" इति दाक्षिण्येन उक्तवान् लक्ष्मीपतिः। तस्मिन् ग्रामे दश दिनानि यावत् स्थितवान् दयानिधिः। प्रतिदिनम् अपि सः दयागुणविषये सार्वजनिकभाषणं करोति स्म।

दयानिधेः भाषणानि व्यर्थानि न जातानि। लक्ष्मीपतेः मनसि अपि भावाना उत्पन्ना यत् मया अपि दयागुणं प्रदर्श्य महती कीर्तिः सम्पादनीया इति। एतदर्थं सः एकं कपटोपायम् आश्रितवान्। सः स्वग्रामीणं निर्धनं श्रीपतिम् आहूय उक्तवान्– "भवान् सर्वथा निर्धनः, पूर्वं चौर्ये भवतः प्रवृत्तिः आसीत् इति अहं जानामि। कोऽपि भवते उद्योगं न ददाति खलु? अतः अहं भवतः साहाय्यं करोमि। अहं यथा वदामि तथा भवान् करोति चेत् भवता महान् लाभः प्राप्यते" इति।

श्रीपतिः लक्ष्मीपतेः कार्यं कर्तुं सिद्धः जातः। तदा लक्ष्मीपतिः कार्यस्वरूपस्य विवरणम् उक्तवान्– "भवता चौर्यार्थं मम गृहं प्रवेष्टव्यम्। धनपेटिकायाः कुञ्चिका मया पूर्वम् एव दीयते भवते। चौर्यसमये रक्षकः वीरेशः भवन्तं गृह्णीयात् एव। अहं चोरे भवति दयां प्रदर्श्य भवन्तं मम गृहे उद्योगिनं करिष्यामि। चौर्यं भवतः वृत्तिः इत्यतः एतेन कार्येण भवतः न अपकीर्तिः। भवति दया प्रदर्शिता चेत् 'धनाभावकारणतः ये चौर्यं

कुर्वन्ति तेषु दया प्रदर्शनीया' इति नीतिः उपस्थापिता भवति लोके'' इति।

'एतेन मम हानिः तु नास्ति' इति जानन् श्रीपतिः तस्याम् एव रात्रौ चौर्यार्थं लक्ष्मीपतेः गृहं प्रविष्टवान्। लक्ष्मीपतिना पूर्वम् एव दत्तया कुञ्चिकया उद्देशपूर्वकं शब्दं कुर्वन् तालम् अपनीय पेटिकाम् उद्घाटितवान् सः।

शब्दं श्रुत्वा जागरितः रक्षकः वीरेशः पेटिकायाः उद्घाटने निरतं चोरं दृष्ट्वा आश्चर्यचकितः जातः। सः मौनं चोरस्य व्यवहारं परिशीलयन् स्थितवान्। चोरः पेटिकाम् उद्घाटितवान्। तत्र सुवर्णमयानि वज्रयुक्तानि आभरणानि प्रकाशन्ते। तानि दृष्ट्वा चोररूपेण आगतः श्रीपतिः, रक्षकः वीरेशः च आश्चर्यचकितौ।

वीरेशः झटिति अग्रे गत्वा चोरं श्रीपतिं दृढं गृहीत्वा उक्तवान्– ''भोः, अभेद्यं गृहं प्रविश्य धनपेटिकायाः उद्घाटनम् अपि कृतवान्। अतः भवान् न सामान्यः चोरः। चोरिते यदि भवता अर्धः भागः दीयेत तर्हि भवन्तं त्यजामि। अहं च मूच्छितः इव पतामि। चोरः मां मूर्च्छितं कृत्वा निर्गतवान् इति गृहस्वामिनं वदामि च'' इति।

वीरेशः एवं वदेत् इति न निरीक्षितवान् आसीत् श्रीपतिः। सः वीरेशम् उक्तवान्– ''भोः, भवति अपि चौर्यबुद्धिः अस्ति इति ज्ञातं मया। सर्वे आपाततः सज्जनाः इव भासन्ते। किन्तु तेषाम् अन्तरङ्गे अपि दुष्टगुणाः




भवन्ति एव। भवतः स्वामी यदि भवदीयं चौर्यगुणं जानीयात् तर्हि भवन्तं कार्यतः निष्कासयेत्। अतः स्वामिने माम् अर्पयतु। आत्मानं रक्षतु। अहं तु मम रक्षणम् अन्येन मार्गेण चिन्तयिष्यामि'' इति।

तदा वीरेशः श्रीपतिं साष्टाङ्गं नमस्कृत्य– ''भोः, भवान् मम उद्योगं रक्षितवान्। भवतः उपकारम् आजीवनं स्मरामि'' इति वदन् तं लक्ष्मीपतेः समीपं नीतवान्। लक्ष्मीपतिः 'चोरम् अत्रैव त्यक्त्वा गच्छतु' इति उक्त्वा वीरेशं ततः प्रेषितवान्। अनन्तरं द्वारं पिधाय– ''भोः, कुञ्चिकां भवते दत्त्वा रहसि अहं भवन्तम् अनुसृतवान् आसम्। प्रवृत्तं समग्रं दृष्टवान् चापि। वीरेशे अपि चौर्यबुद्धिः अस्ति इति ज्ञातम्। तादृशं

रक्षणे नियोजयता मया दोषः कृतः। चोरस्य भवतः यादृशी प्रामाणिकता तादृशी प्रामाणिकता नास्ति वीरेशस्य। अतः तम् उद्योगात् निष्कास्य भवन्तं तत्र नियोजयिष्यामि। किन्तु मम सन्देहः – भवान् वीरेशस्य विषयं मां किमर्थं न उक्तवान्? इति। यदि भवता उक्तं युक्तम् इति भासेत तर्हि एव उद्योगः दीयते मया" इति उक्तवान्।

तदा श्रीपतिः उक्तवान्– "कश्चित् चोरः इति यदा ख्यातिं प्राप्नोति तदा सः कुत्रापि उद्योगं न प्राप्नोति। भवान् तु चोराय मह्यम् एव उद्योगं दातुं सिद्धः। एतादृशः भवान् वीरेशे अपि दयां प्रदर्शयेत् एव इति मत्वा अहं किमपि न उक्तवान्" इति।

"दयाम् अहं प्रदर्शयेयम्। तदस्तु, किन्तु तस्य चौर्यगुणः भवता न निवेदितः यत्,तत् दोषाय भवेत् एव खलु?" इति उक्तवान् लक्ष्मीपतिः।

तदा श्रीपतिः शिरः अवनमय्य– "सत्यं श्रीमन्, मया दोषः कृतः। तत्र कारणम् अपि अस्ति। भवान् वीरेशस्य दोषं क्षाम्यति इति अहं जानामि। भवतः जीवने क्षमाप्रदर्शनार्थम् अवकाशाः अपि बहवः। किन्तु चोरस्य मम जीवने एतादृशः अवकाशः सर्वथा विरलः। वीरेशः कथञ्चित् क्षमां प्राप्नोति स्म एव। अतः मया एव क्षमा प्रदर्शिता" इति उक्तवान्।

'क्षमा प्रदर्शनीया इति चोरः श्रीपतिः अपि इच्छति। अहं तु दयानिधेः उपदेशं श्रुत्वा अपि वास्तविकतया दयागुणप्रदर्शने न उद्युक्तः। श्रीपतेः व्यवहारं दृष्ट्वा इदानीं चिन्तयामि– वीरेशः क्षन्तव्यः इति। एवं च श्रीपतेः अपेक्षया अहम् अधमः सञ्जातः। दयागुणस्य प्रदर्शनं यदा चिन्तितं तदा वीरेशस्य स्वभावः अपि मया ज्ञातः। एवं दयागुणप्रदर्शनम् अन्यविधलाभम् अपि आनयति' इति आलोच्य लक्ष्मीपतिः कीर्तिकामनां परित्यज्य सर्वत्र दयां प्रदर्शयितुम् उद्युक्तः। एतेन सः अल्पे एव काले दयालुः इति ख्यातिं प्राप्तवान्।






हनूमान् सीतायाः पादौ भक्त्या आदरेण च पश्यन् मृदुभिः वचनैः उक्तवान्– "मातः, सीतादेवी खलु भवती? भवतीम् एव अन्विष्यन् आगतः श्रीरामस्य दूतः अस्मि अहम्। रामः कुशली। लक्ष्मणः अपि कुशली। कुशलवार्ता नमस्काराश्च निवेदनीयाः इति लक्ष्मणः मां सूचितवान् अस्ति" इति।

रामलक्ष्मणयोः नाम्नः श्रवणात् सीता आनन्दातिशयेन उद्रिक्ता जाता। किन्तु मन्दं पदं स्थापयन्तम्, अग्रे आगच्छन्तं हनूमन्तं दृष्टवत्याः तस्याः सन्देहः– एषः कपिरूपेण आगतः रावणः एव स्यात् इति। एवं चिन्तयन्त्याः तस्याः पादौ कम्पेते। सा शक्तिहीना इव भूमौ पतितवती।

सीतायाः मनसि उत्पन्नं विचारं, भीतिं च सूक्ष्मग्राही हनूमान् ज्ञातवान् एव। सः सीतां पुनरपि नमस्कृत्य मौनं स्थितवान्। तदा सीता तम् अपश्यन्ती दीर्घं निःश्वसती उक्तवती– "यदि भवान् रावणः स्यात् तर्हि एवं रूपान्तरेण आगमनं न शोभावहम्। जनस्थाने प्रवृत्तां वञ्चनाम् अहं सम्यक् स्मरामि। अतः इदानीं पुनः वञ्चिता न भवामि। यदि भवान् रामदूतः स्यात् तर्हि रामस्य अङ्गानि वर्णयतु, तस्य गुणविशेषान् निरूपयतु च" इति।

हनूमान् सीतायाः मनसि जातं विचारकोलाहलं जानन् रामेण दत्तं मुद्राङ्गुलीयकं सीतायै अर्पितवान्। 'मयि विशेषविश्वासं प्रकटयन् रामः एतत् मम



हस्ते निक्षिप्तवान् आसीत्' इति निवेदितवान् च। अनन्तरं लङ्कां प्रति कथम् आगतम् इत्यपि निरूपितवान् [illegible]:।

एतत्सर्वं शृण्वत्याः सीतायाः आतङ्कः निवृत्तः। सा समाधानचित्ता सती हनूमता उक्तं समग्रं कुतूहलेन श्रुतवती। रामसुग्रीवयोः सख्यं, वालिवधम्, अन्वेषणप्रयत्नारम्भं, समुद्रलङ्घनं, लङ्कायां कृतम् अन्वेषणं च विस्तरेण निवेदितवान् हनूमान्। सीता तत् आसक्त्या शृण्वती मुद्राङ्गुलीयकं पुनः पुनः पश्यति।

सर्वं निवेद्य हनूमान् सीताम् उक्तवान्– ''मातः, मयि भवत्याः विश्वासः उत्पन्नः इति ज्ञात्वा अहं नितरां सन्तुष्टः अस्मि। इतः परं मया अत्र किं करणीयम्? भवत्या यत् आदिश्यते तत् कृत्वा अविलम्बेन किष्किन्धां प्रतिगमिष्यामि अहम्। भवद्दर्शनवार्तायाः श्रवणे कुतूहलिनः वानराः सुग्रीवादयः रामलक्ष्मणौ च मया त्वरया द्रष्टव्याः खलु?'' इति।

तदा सीता उक्तवती– ''आञ्जनेय! अपारं समुद्रम् उल्लङ्घितवतः, राक्षसानां दृष्टिपातात् आत्मानं रक्षितवतः भवतः धैर्यं, साहसं, प्रज्ञा, पराक्रमः, विवेकः च नितरां श्लाघ्याः एव। इतःपरं भवता अत्र करणीयं किमपि नास्ति। 'रावणेन दत्तः अवधिः समाप्तप्रायः' इति रामः निवेदनीयः भवता। अतः तदभ्यन्तरे तेन अत्र आगत्य अहं रक्षणीया। रावणस्य अनुजः विभीषणः सज्जनः इति श्रूयते। परस्त्रियः अपहरणं कुलनाशाय इति तेन रावणः बोधितः इत्यपि श्रूयते। विभीषणस्य पुत्री नला एतं विषयं मां निवेदितवती। सा माम् उक्तवती यत् मातुः सूचनायाः अनुगुणं मया अत्र आगत्य निवेदितम् इति। एतादृशाः सन्ति इत्यतः एव अहम् एतावत्पर्यन्तं प्राणान् धृतवती अस्मि'' इति।

''एतादृशे कष्टकाले सहानुभूतिं प्रदर्शयन्तः जनाः अत्र सन्ति इति तु महते सन्तोषाय। इतोऽपि कानिचन दिनानि एवम् एव धैर्येण तिष्ठतु। मम मुखात् वार्तां श्रुत्वा रामः वानरैः भल्लूकैः च सह अत्र



आगमिष्यति। अथवा अन्यत् अपि कर्तुं शक्यते। भवती मम स्कन्धे उपविशतु। अहं लीलया भवतीं रामसमीपं नेष्यामि। एवं कृतं चेत् अल्पे एव काले रामदर्शनं भविष्यति" इति उक्तवान् हनूमान्।

"किम् उक्तं भवता? एतादृशः अल्पशरीरी भवान् माम् उन्नीय समुद्रलङ्घनं करिष्यति वा? अविवेकी भवान्। आकारसदृशी प्रज्ञा भवतः" इति मन्दहासपूर्वकम् उक्तवती सीता।

'मम सामर्थ्यातिशयविषये सीतायाः सन्देहः' इति आलोच्य हनूमान् स्वस्य स्वरूपं दर्शयितुम् इच्छन् द्वित्राणि पदानि पृष्ठतः गत्वा आत्मानं वर्धितवान्। महोन्नतम् उग्रं च रूपं दृष्ट्वा आश्चर्यचकिता अभवत् सीता। 'हनूमतः सामर्थ्यम् ऊहातीतम्' इति ज्ञातवती सा।

"अम्ब! यदि मम सामर्थ्यम् अल्पं स्यात् तर्हि अहं कथं वा अत्र आगन्तुं शक्नुयाम्? अतः अलं सन्देहेन। मम स्कन्धे उपविशतु। किष्किन्धां नेष्यामि भवतीम्। रामलक्ष्मणयोः दुःखम् अपनयतु भवती" इति उक्तवान् हनूमान्।

"आञ्जनेय! भवतः सामर्थ्यातिशयः प्रत्यक्षं दृष्टः मया। अविलम्बेन अहं रामेण मेलनीया इति भवतः आशयम् अपि अवगच्छामि अहम्। तथापि अहम् इदानीं भवता सह न आगच्छामि। मां नयन्तं भवन्तं दृष्ट्वा राक्षसाः हठात् आक्रमणं कुर्युः। युद्धरतस्य भवतः स्कन्धात् यदि अहं समुद्रे पतेयं तर्हि समग्रः श्रमः व्यर्थः स्यात्। अथवा अहं रामसान्निध्यं प्राप्तवती इत्येव भावयाम। तदापि शत्रोः रावणस्य पीडा स्यात् एव। यावत् शत्रुः निर्दयं न दण्ड्यते तावत् न शान्तिः। अतः शत्रुदमनं कृत्वा एव रामः मां नयतु। अन्यच्च परपुरुषस्पर्शः पतिव्रतायाः निषिद्धः। पतिव्रताधर्मं जानती अहं नियमभङ्गं कर्तुं न इच्छामि। अपरञ्च यदि भवान् मां नयेत् तर्हि तत् रामस्य पराक्रमस्य अपमानकरं स्यात्। धीरः कश्चित् अन्यस्य अनुग्रहात् फलं प्राप्तुं न इच्छति। अतः रामस्य अत्र आगमनम् एव वरम्" इति उक्तवती सीता।



अभवत्। सः कोपेन दर्भं ब्रह्मास्त्रमन्त्रेण अभिमन्त्र्य काकम् उद्दिश्य प्रयुक्तवान्। दर्भास्त्रेण अनुधाव्यमानः इन्द्रपुत्रः जयन्तः सर्वेषु लोकेषु अधावत्। किन्तु कुत्रापि आश्रयम् अप्राप्नुवन् अन्ते रामम् एव शरणम् अगच्छत्। ब्रह्मास्त्रं व्यर्थं भवितुं नार्हति इत्यतः रामः तेन जयन्तस्य एकं नेत्रम् अहरत्। जयन्तः स्वलोकम् अगच्छत्। एवं दर्भमात्रेण एव शत्रुनाशनं कर्तुं समर्थः रामः इतोऽपि मम कष्टस्य निवारणे कुतो वा उद्युक्तः न जातः? तेन रावणः कुतो वा इतोऽपि न मारितः? इति मम चिन्ता'' इति।

''अम्ब! भवती कुत्र अस्ति इत्येव अद्यावधि न ज्ञातम् आसीत्। अन्यच्च भवत्याः वियोगतः रामस्य सामर्थ्यं मलिनं जातम् आसीत्। किन्तु इतः परं चिन्ता करणीया नास्ति। मम मुखात् वार्तां श्रुत्वा विकसितवदनः रामः द्विगुणितेन उत्साहेन अत्र आगत्य शत्रुं रावणं लीलया संहरिष्यति। दुःखमयानि दिनानि गतानि। इतः परं सन्तोषमयानि दिनानि आगमिष्यन्ति। अतः भवत्या दुःखितया न भवितव्यम्। रामदर्शनकालः अनतिदूरे एव अस्ति'' इति सान्त्वनवचनानि उक्तवान् हनूमान्।

''आञ्जनेय! धैर्यं धर्तुं प्रयत्नं करिष्यामि। मत्परतया भवान् एव रामं साष्टाङ्गं प्रणमतु। लक्ष्मणं मम कुशलवार्तां निवेदयतु। लक्ष्मणः सज्जनः। राज्यसुखं परित्यज्य

''अम्ब! भवत्या युक्तम् एव उक्तम्। फलाफलम् अविचिन्त्य मया उपायः चिन्तितः आसीत्। क्षन्तव्यः अहम्। अहं भवतीं दृष्टवान् इत्येतत् प्रमाणीकर्तुं मया किमपि प्रदर्शनीयं भवेत् खलु? अतः अभिज्ञानार्थं किमपि ददातु। तत् रामाय प्रदर्शयिष्यामि'' इति उक्तवान् हनूमान्।

तदा सीता उक्तवती— ''अहं पूर्वं प्रवृत्तां काञ्चित् घटनां वदामि। तां घटनां रामं निवेदयतु। पूर्वं गङ्गातीरे चित्रकूटपर्वतस्य ईशान्यदिशि आश्रमे कदाचित् रामः मम पादम् उपधानीकृत्य शयनं कृतवान् आसीत्। तदा मम रूपात् आकृष्टः इन्द्रपुत्रः जयन्तः काकरूपेण आगत्य मां व्रणिताम् अकरोत्। मम रक्तात् रामः आर्द्रः सन् जागरितः

अग्रजम् अनुसृतवान् सः। तस्य हितवचनं मया धिक्कृतं यत् तस्य घोरः परिणामः प्राप्तः मया। न जाने, तस्य दर्शनं कदा भवेत् इति'' इति वदन्ती सीता आञ्चलेन बद्धं चूडामणिं हनूमतः हस्ते स्थापितवती।

चूडामणिं नेत्राभ्यां स्पृष्ट्वा महता सन्तोषेण सीतां सप्रदक्षिणं नमस्कृतवान् हनूमान्। ''गमनार्थम् अनुज्ञादानेन अहम् अनुग्रहणीयः'' इति उक्तवान् च।

''आञ्जनेय! चूडामणिदर्शनतः रामः मां, मातरं,पितरं च स्मृत्वा अश्रूणि स्रावयेत्। तत्सन्दर्भे भवता सान्त्वनवचनानि वक्तव्यानि। इतः परं सर्वं भवन्तम् आधारीकृत्य तिष्ठति। मम एतत् कष्टम् अविलम्बेन यथा अपगच्छेत् तथा उपायं करोतु। आर्यं सुग्रीवं, तन्मन्त्रिगणं, वानरप्रमुखान् च मम नमस्कारान् निवेदयतु'' इति उक्तवती सीता।

हनूमान् अङ्गीकारपूर्वकं शिरः चालितवान्। अत्रान्तरे कञ्चित् सन्देहं प्राप्य सीता पृष्टवती– ''आञ्जनेय, भवान् तु समुद्रम् उल्लङ्घ्य अत्र आगतः। किन्तु रामलक्ष्मणौ वानरसेना वा एतं समुद्रं कथम् उल्लङ्घयेयुः? रावणस्य संहारः रामेण कर्तुं शक्यः वा? रावणं भवान् संहर्तुं शक्नुयात्। तदा तु रामस्य अपकीर्तिः भवेत् खलु?'' इति।

''देवि! अस्थाने सन्देहः भवत्याः। किष्किन्धाधिपतिः सुग्रीवः सामान्यः इति मा भावयतु कृपया। सुग्रीवसेनायां मादृशाः बहवः सन्ति। ते भवत्याः अन्वेषणार्थं





मारिताः चेदेव एते राक्षसाः भीतिं प्राप्नुयुः। अतः अल्पं शौर्यं प्रदर्श्य राक्षसाः कथमपि युद्धार्थं प्रेरणीयाः' इति।

'अशोकवनम् एतत् सुन्दरम् अस्ति। एतत् वनं श्रद्धया पालितं दृश्यते। अतः एतत् रावणस्य प्रियं स्यात् एव। प्रियस्य वस्तुनः ध्वंसात् सर्वे कोपं प्राप्नुवन्ति। अतः एतत् अशोकवनं ध्वंसयामि। तेन क्रुद्धः रावणः युद्धार्थं राक्षसान् प्रेषयिष्यति। तैः सह युद्धं कृत्वा अनुभवं प्राप्य मम सामर्थ्यम् अपि किञ्चित् प्रदर्श्य इतः निर्गन्तव्यम्' इति निश्चितवान् हनूमान्।

अनन्तरं सः अशोकवनस्य ध्वंसम् आरब्धवान्। वृक्षाः तेन पातिताः। रमणीयाः कासाराः कलुषीकृताः। कासारशिलाः उत्पाटिताः। क्रीडापर्वतस्य शिखराणि मर्दितानि। लतागुल्मादयः उन्मूलिताः। अल्पे एव काले अशोकवनम् उध्वस्तं जातम्। वृक्षम् आश्रितवन्तः पक्षिणः कलरवं कुर्वन्तः इतस्ततः धावितवन्तः। पक्षिणाम् आर्तस्वरः दिशासु प्रतिध्वनिताः। जञ्झावातेन उध्वस्तम् इव दृश्यते स्म तत् वनम्। अशोकवनम् इदानीं शोकजनकं जातम् आसीत्।

एवम् उत्पातम् उत्पाद्य हनूमान् अशोकवनस्य महाद्वारस्य पार्श्वे भित्तेः उपरि उपविश्य तदा तदा वीरगर्जनं कुर्वन् राक्षसानाम् आगमनं प्रतीक्षमाणः

विभिन्नासु दिशासु गताः। वयं केचन दक्षिणदिशि आगताः। तेषु अहम् एकः एव समुद्रलङ्घनं कृतवान्। मया एव लङ्घितस्य एतस्य समुद्रस्य लङ्घनं न कष्टकरम्। यदि वानरवीराः सर्वे सम्भूय आगच्छेयुः तर्हि एषा लङ्का नामावशिष्टा भवेत्। अतः भवती चिन्ताक्रान्ता मा भवतु। जयः अस्माकम् एव भविष्यति'' इति धैर्यवचनानि उक्त्वा हनूमान् सीतायाः अनुज्ञां प्राप्य ततः प्रस्थितवान्।

किञ्चिद्दूरं गमनानन्तरं सः चिन्तितवान्– 'मया अन्यदपि कार्यं कृत्वा एव इतः प्रतिगन्तव्यम्। राक्षसानां सामर्थ्यं कियत्? लङ्कायाः सेनासामर्थ्यं कियत्? तेषां युद्धतन्त्राणि कानि? इत्यादीनि ज्ञात्वा एव मया इतः निर्गन्तव्यम्। अन्यच्च केचन

उपविष्टवान्।

वृक्षभङ्गशब्दः पक्षिणाम् आर्तनादश्च राक्षसीभिः श्रुतः। ताः झटिति निद्रातः उत्थाय किं प्रवर्तमानम् अस्ति इति आश्चर्येण भीत्या च दृष्टवत्यः। वननाशने मग्नः भीमकायः हनूमान् दृष्टः ताभिः। राक्षस्यः मां पश्यन्त्यः सन्ति इति ज्ञात्वा हनूमान् स्वस्य शरीरं पुनरपि वर्धितवान्।

ताः राक्षस्यः सीतायाः समीपं गत्वा – "कः सः? कुतः आगतः? केन प्रेषितः? किमर्थम् अत्र आगतः? भवत्या सह तेन वार्तालापः कृतः इति काश्चन वदन्ति। किम् उक्तं तेन? भीतिः मास्तु। वस्तुस्थितिं यथावत् वदतु" इति उक्तवत्यः।

"राक्षसाः एव खलु कामरूपिणः? राक्षसानां व्यवहारम् अहं कथं ज्ञातुं शक्नोमि? राक्षसस्य एव कस्यचित् दौष्ट्यं स्यात् एतत्। अन्यस्य स्यात् चेदपि तत् भवत्यः एव ज्ञातुं शक्नुवन्ति, न तु अहम्। भुजङ्गः एव भुजङ्गगतिं जानाति। तं दृष्ट्वा अहम् अपि भीता अस्मि। कः सः? कुतः आगतः? ज्ञात्वा वदन्तु भवत्यः" इति राक्षसीः उक्तवती सीता।

हनूमतः व्यवहारं दृष्ट्वा राक्षस्यः नितरां भीताः। सीतायाः रक्षणार्थं काश्चन स्थितवत्यः। अन्याः धावन्त्यः रावणसमीपं गतवत्यः। अन्याः काश्चन आक्रन्दनं कुर्वत्यः राक्षसवीरान् आह्वातुं गतवत्यः।

रावणसमीपं गताः कम्पमानाः रावणं साष्टाङ्गं नमस्कृत्य – "प्रभो, महाबलशाली कश्चित् अशोकवनस्य ध्वंसं कुर्वन् अस्ति। सः सीतया सह वार्तालापं कृतवान् इति काश्चन वदन्ति। सः कः इति न जानामि इति सीता वदति। वानररूपः सः कः इति वयम् अपि न जानीमः। इन्द्रेण कुबेरेण वा प्रेषितः अपि भवितुम् अर्हति सः। एतावत् तु निश्चितं यत् सः सामान्यः तु न इति। भवतः प्रियम् अशोकवनं नाशयतः तस्य महत् धैर्यं स्यात् एव। भवता सः कठोरं दण्डनीयः। अन्यथा सः लङ्कनगर्याः नाशने उद्युक्तः भवेत्" इति।





# मायातल्पम्

धर्मसिन्धुः नाम राजा पूर्वं नेपालदेशं पालयन् आसीत्। राजा परोपकारशीलः त्यागमूर्तिः धर्ममार्गानुयायी च। वेषान्तरं धृत्वा पादाभ्यां सञ्चारे तस्य विशेषासक्तिः। एवं सञ्चारसमये सः आत्मना सह कमपि न नयति स्म।

कदाचित् धर्मसिन्धुः सामान्यजनस्य वेषं धृत्वा पथिकः इव गच्छन् कञ्चित् पर्वतप्रदेशं प्राप्तवान्। राजा अग्रे गतवान्। तत्र गभीरा खनी दृष्टा। अग्रे गन्तुं मार्गः न दृश्यते।

अग्रे किं करणीयम् इति चिन्तयन् धर्मसिन्धुः तत्रैव स्थितवान् आसीत्। तावता आजानुबाहुः कश्चित् तत्र आगतः। सः अत्यमूल्यानि वस्त्राणि धृतवान् आसीत्। तस्य हस्ते रमणीयः सञ्चारदण्डः दृश्यते स्म। सः दृढकायः सुन्दरः च। अतः दर्शनमात्रेण एव ज्ञायते स्म यत् सः कश्चन विशिष्टः पुरुषः इति।

सामान्यः इव दृश्यमानं धर्मसिन्धुं दृष्ट्वा सः प्रीत्या उक्तवान्– "भोः, महती श्रान्तिः भवतः इति भाति। कः भवान्? कुतः आगतवान्? कुत्र गन्तुम् इच्छति? एतस्मिन् प्रदेशे बहवः पथिकाः दृश्यन्ते। तादृशानां वसतिभोजनादिनिमित्तं मया यथाशक्ति प्रयत्नः न कृतः चेत् अनौचित्यं स्यात् खलु? सौभाग्यवशात् देवेन प्रभूता सम्पत्तिः दत्ता अस्ति। यात्रिकाणां सेवायाः निमित्तं तत् व्ययीक्रियते मया। एतत्प्रदेशम् आगताः यात्रिकाः यदि मम सत्कारं प्राप्य तृप्तिं प्रकटयेयुः तर्हि ममापि तृप्तिः। अहो, स्वविषये मया बहु उक्तम् इति भाति। एतेन खेदः तु न जातः स्यात् खलु भवतः। गच्छाव तावत् मम गृहम्। आगच्छतु मया सह" इति।

"नेपालदेशीया जानपदकथा"



'अहं कश्चन पथिकः' इति आत्मनः परिचयम् उक्तवान् धर्मसिन्धुः। "हन्त! सुदूरात् आगतः भवान्! इदानीं मार्गभ्रष्टः अपि। रात्रिः अपि आसन्ना। अद्य इतः परं खनीं गुहाः नदीः च अतिक्रम्य अग्रे गमनं दुःसाध्यम् एव। तथापि चिन्ता मास्तु। आगच्छतु मया सह। भोजनं व्यवस्थापयामि। शयनार्थं समीचीनं तल्पम् अपि कल्पयामि। मम गृहे सुखेन शयानः रात्रिं यापयतु। श्वः प्रातः उद्दिष्टं स्थलं गन्तुम् अर्हति" इति उक्तवान् सः विशिष्टपुरुषः।

उभौ अपि पर्वतशिखरम् उद्दिश्य प्रस्थितवन्तौ। तावता सुदूरे जनानां पादशब्दः श्रुतः। पुनः अल्पे एव काले कश्चन वणिक्समूहः अपि दृष्टः। ते गर्दभस्य उपरि वस्तूनि आरोप्य मन्दया गत्या क्लेशेन आगच्छन्तः आसन्। तान् दृष्ट्वा सः विशिष्टः पुरुषः– 'तान् दृष्ट्वा इदानीं प्रत्यागच्छामि' इति धर्मसिन्धुम् उक्त्वा ततः निर्गतवान्।

"मान्याः, वणिजः खलु भवन्तः? अन्धकारप्रसारसमये प्रयाणम् अनुचितम्। अतः आगच्छन्तु मया सह। यथाशक्ति भवतः सर्वान् सत्करिष्यामि। भुक्त्वा विश्रान्तिसुखम् अनुभूय श्वः प्रातः इतः गच्छन्तु। अद्य मम सौभाग्यम्। बहूनाम् अतिथीनां सत्कारार्थम् अवकाशं प्राप्तवान् अस्मि अहम्" इति वदन् तान् वणिजः साग्रहं स्वगृहं प्रति आहूतवान्।

यदा विशिष्टपुरुषः वणिजैः सह वार्तालापं कुर्वन् आसीत् तदैव कश्चन वृद्धः धर्मसिन्धोः समीपम् आगतवान्। तस्य शिरसि महान् काष्ठबन्धः आसीत्।

वृद्धस्य क्लेशं दृष्ट्वा धर्मसिन्धुः साहाय्यार्थं तस्य समीपं गतवान्। तदा वृद्धः– "परोपकारी भवान् कुशली खलु? एतस्मिन् प्रदेशे भवादृशाः करुणालवः विरलाः" इति उक्तवान्।

तदा राजा धर्मसिन्धुः आश्चर्यम् अनुभवन् स्वस्य इतिवृत्तं निवेद्य– "किर्थम् एवं वदति भवान्? मार्गे कश्चन महापुरुषः मिलितः। अद्य रात्रौ मम गृहे आतिथ्यं स्वीकरणीयम्

इति साग्रहम् उक्तवान् अस्ति सः। दर्शनमात्रेण एव ज्ञायते यत् सः कश्चन सज्जनः इति। धनिकेषु सौजन्यं लोके विरलम्। एतस्य व्यवहारः अपि सुमधुरः। अतिथिसत्कारं नित्यकार्यं भावयति सः। तस्मिन् स्थिते अपि, अत्र सज्जनाः विरलाः इति वदति खलु भवान्! आश्चर्यकरम् एतत्'' इति उक्तवान्।

तदा वृद्धः सुदीर्घं निःश्वस्य– ''हुँ, एतस्य जाले भवान् अपि पतितः वा?'' इति स्वगतम् इव उक्तवान्।

''किमर्थम् एवं वदति भवान्?'' इति पृष्टवान् धर्मसिन्धुः।

''भवान् कपटताम् अजानन् सरलः। भवान् उत्तमैः लक्षणैः युक्तः दृश्यते। भवता प्राप्यमाणां दुर्गतिं स्मृत्वा खेदम् अनुभवामि अहम्। सः आजानुबाहुः पुरुषः न सज्जानः। परमदुष्टः सः। शयनार्थं तल्पं कल्पयामि इति उक्तं स्यात् खलु तेन। तच्च तल्पं मायातल्पम्'' इति खेदेन उक्तवान् वृद्धः।

धर्मसिन्धुः आश्चर्यम् अनुभवन्– ''एतस्य विषयं विस्तरेण वदतु कृपया'' इति प्रार्थितवान्।

तदा वृद्धः पुनः उक्तवान्– ''सः कश्चन राक्षसांशयुक्तः धूर्तः पुरुषः। धूर्तकेतुः इति तस्य नाम। मन्त्रबलेन सुवर्णं निर्मातव्यम् इति तस्य इच्छा। अतः सः काञ्चित् आसुरीं शक्तिं तोषितवान्। एतस्य भक्त्या तुष्टा सा



आसुरशक्तिः एतस्य पुरतः प्रत्यक्षीभूय– 'वत्स! भवतः भक्त्या अहं सन्तुष्टा अस्मि। भवतः अपेक्षाम् अहं जानामि। तदर्थं भवते एकं तल्पं ददामि। भल्लूकतल्पम् इति तस्य नाम। भल्लूकरोमभिः एव निर्मितं तत्। एतस्य तल्पस्य उपरि शयितस्य यस्य दैर्घ्यं तल्पस्य दैर्घ्येण तुल्यं भवति सः मह्यं बलिरूपेण अर्पणीयः भवता। तदा भवतः अभीष्टं सेत्स्यति। तल्पविषये....' इति यावत् उक्तवती तावता एव 'सर्वं ज्ञातं मया' इति सन्तोषातिरेकेण उक्त्वा तया दत्तं तल्पं स्वीकृत्य अत्र आगतवान् धूर्तकेतुः।

तल्पस्य निमित्तं महत् भवनम् अपि निर्मितवान् सः। एतेन मार्गेण ये गच्छन्ति तान्



सत्कारव्याजेन गृहं नीत्वा रात्रौ तल्पे शाययति एषः। तल्पस्य दैर्घ्यस्य अपेक्षया यदि शरीरस्य दैर्घ्यम् अधिकं भवति तर्हि सन्धिषु ताडयित्वा नोदयित्वा च दैर्घ्यं न्यूनीकर्तुं प्रयत्नं करोति। दैर्घ्यं न्यूनं चेत् बलात् आकर्षति। एतस्य पीडां सोढुम् अशक्ताः सर्वे प्राणान् त्यजन्ति। एतेन क्रमेण एतेन दुष्टेन बहवः मारिताः। तल्पस्य दैर्घ्येण समानं दैर्घ्यं मम एकस्य एव अस्ति'' इति।

''एवं तर्हि इतोऽपि भवान् कथं जीवति? भवन्तम् आसुरशक्त्यै बलिरूपेण सः न अर्पितवान् वा?'' इति आश्चर्येण पृष्टवान् धर्मसिन्धुः।

''पूर्वं कदाचित् अहम् अपि भवान् इव पथिकरूपेण अत्र आगतः। तदा एषः धूर्तकेतुः माम् अपि मधुरैः वचनैः वशीकृत्य गृहं नीतवान्। भोजनं दत्त्वा भल्लूकतल्पस्य उपरि शयनं कारितवान्। मम दैर्घ्यं तल्पस्य दैर्घ्यस्य अपेक्षया अधिकम् आसीत्। मया बहुकालं यावत् निद्रा न प्राप्ता। अतः अहम् उपधानं पादस्य दिशि संस्थाप्य शयनं कृतवान्। तदा तु मम दैर्घ्यं तल्पस्य दैर्घ्येण समानं जातम् आसीत्। इदानीं तल्पस्य रहस्यं ज्ञातं मया। अनन्तरं दीर्घकालः अतीतः चेदपि मया निद्रा न प्राप्ता। तथापि नेत्रे निमील्य शयनं कृतवान् आसम्।

मध्यरात्रे धूर्तकेतुः आगत्य दृष्टवान्। मम दैर्घ्यं तल्पदैर्घ्येण समानम् आसीत्। 'योग्यः जनः प्राप्तः' इति सः नितरां सन्तुष्टः। मां बलिरूपेण अर्पयितुं मुहूर्तम् अपि निश्चितवान् सः। बलिं मां दृढकायं कर्तुं सः प्रतिदिनं मह्यं समीचीनम् आहारं ददाति स्म। कदाचित् मया परिचारकद्वारा ज्ञातं यत् बलिरूपेण माम् अर्पयितुं धूर्तकेतुः निश्चितवान् अस्ति इति।

मुहूर्तात् पूर्वदिने मध्यरात्रसमये धूर्तकेतुः मम प्रकोष्ठम् आगतवान्। तदा अहम् उद्देशपूर्वकं तल्पस्य शिरोभागे उपधानं संस्थाप्य शयनं कृतवान् आसम्। अतः मम धैर्घ्यं तल्पदैर्घ्यस्य अपेक्षया अधिकं दृश्यते स्म। एतत् दृष्टवतः धूर्तकेतोः महत् आश्चर्यम्! अल्पे एव काले दैर्घ्ये एतावत्

परिवर्तनं कथं जातम् इति न ज्ञातवान् सः।

'एतादृशस्य दैर्घ्यपरिवर्तनस्य किं कारणम्' इति मां पृष्टवान् सः। तल्पे शयनक्रमः यः अस्ति तस्य परिणामतः एवं भवति इति अहं जानामि स्म। किन्तु धूर्तकेतुः एतत् तल्परहस्यं न जानाति स्म। अतः अहम् एतत् रहस्यं तं न उक्तवान्। सः मां बहुधा पीडितवान्। तथापि अहं रहस्यं न उक्तवान्। अन्ते क्रुद्धः सः मां दासं कृतवान्। मद्द्वारा बहूनि कार्याणि कारयन् अस्ति एषः। प्रतिदिनं मया जलोद्धरणं करणीयम्। काष्ठानि सङ्गृह्य आनेतव्यानि। एतादृशानि बहुविधानि कष्टकराणि कार्याणि करणीयानि मया। तथापि मया अद्यावधि तल्पस्य रहस्यं न उक्तम्। तल्पाकारकः अन्यः न लब्धः इत्यतः सः प्रतिदिनं नूतनान् नीत्वा परीक्ष्य निराशया मारयन् अस्ति" इति स्वकीयं चरित्रं निवेदितवान् वृद्धः।

यावत् वृद्धः इतिवृत्तं निवेदयन् आसीत् तावता वणिग्भिः सह आगच्छन् धूर्तकेतुः अनतिदूरे दृष्टः। वृद्धः धर्मसिन्धोः कर्णे झटिति किमपि उक्त्वा काष्ठबन्धम् उन्नीय मौनं ततः निर्गतवान्।

तस्मिन् दिने प्राप्तेषु अतिथिषु धर्मसिन्धुः एव सुन्दरः। तदीयः आकारः अपि तल्पस्य दैर्घ्येण समः इव भासते स्म। अतः धूर्तकेतुः धर्मसिन्धुना सह विशेषादरेण व्यवहरति। षड्रसोपेतस्य भोजनस्य अनन्तरं धूर्तकेतुः



धर्मसिन्धुं सूचितवान् यत् दीर्घप्रयाणतः श्रान्तः भवान् तल्पे शयनं कुर्वन् विश्रान्तिसुखम् अनुभवतु इति।

मृदुलं रमणीयं तल्पं तत्। धर्मसिन्धुः तल्पं दृष्ट्वा आश्चर्यं प्रकटयन् तल्पस्य उपरि शयनम् अजानन् इव अभिनयन् हस्ताभ्यां तल्पं पुनः पुनः स्पृशन् भीतिं प्रकटयन् आरुह्य तल्पस्य पादभागे उपधानं संस्थाप्य शयनं कृतवान्। अन्यान् वणिजः अन्यत्र शायितवान् धूर्तकेतुः।

मध्यरात्रे यदा आगत्य दृष्टं तदा धर्मसिन्धोः दैर्घ्यं तल्पदैर्घ्येण समानम् आसीत्। एतेन धूर्तकेतुः नितरां सन्तुष्टः अभवत्। वणिजः ततः प्रेषितवान् सः।

धर्मसिन्धोः पोषणे विशेषासक्तिं प्रदर्शितवान्। बलियोग्यः अपरः लब्धः इत्यतः वृद्धस्य विषये अपि औदासीन्यं प्रदर्शयति धूर्तकेतुः।

धूर्तकेतुः यथा न जानीयात् तथा वृद्धेन मिलति धर्मसिन्धुः। परस्परं समालोच्य अग्रिमयोजना सज्जीकृता ताभ्याम्।

कदाचित् धर्मसिन्धुः धूर्तकेतुं विनयेन उक्तवान्– "एतस्मिन् शयने शयनं कुर्वन्तं भवन्तं न दृष्टवान् एव अहम्। सर्वान् सत्कुर्वता भवता अद्य एतस्मिन् तल्पे शयनं करणीयम् एव" इति। धूर्तकेतुः एतं निवेदनम् अङ्गीकृतवान्। तल्पस्य पादभागे धूर्तकेतोः शिरः यथा भवेत् तथा उपधानं स्थापितवान् आसीत् धर्मसिन्धुः। अतः निद्रितस्य धूर्तकेतोः तल्पस्य च दैर्घ्यं समानम् आसीत्।

पूर्वयोजनायाः अनुगुणं वृद्धः निद्रितेन धूर्तकेतुना सहितं तल्पम् आसुरीशक्तेः आलयं नीतवान्। तथापि धूर्तकेतुना तु जागरणं न प्राप्तम्। धूर्तकेतुं बलिरूपेण अर्पयितुम् उद्युक्तः धर्मसिन्धुः।

तावता धूर्तकेतौ दयावती आसुरशक्तिः तत्र प्रत्यक्षा जाता। "एषः धूर्तकेतुः दुष्टः चेदपि मम भक्तः। भक्तस्य नाशम् अहं न इच्छामि। अतः एतं मा मारयतु कृपया" इति धर्मसिन्धुं सूचितवती सा।

"एषः मारणीयः एव इति मम आशयः न। एतस्य पीडा अपगच्छेत् इति मम आशयः। एतदर्थं भवती एतं शक्तिहीनं करोतु। तदा अहं मारणप्रयत्नं परित्यजामि" इति उक्तवान् राजा धर्मसिन्धुः।

धर्मसिन्धोः सन्तोषार्थम् आसुरीशक्तिः धूर्तकेतुं शक्तिहीनं कृतवती। धर्मसिन्धुं च सुवर्णनिर्माणरहस्यं बोधितवती।

एवं राजा सुवर्णनिर्माणरहस्यं ज्ञातवान्। जनपीडकं धूर्तकेतुं शक्तिहीनं चापि कृतवान्। तस्मिन् प्रदेशे ये सञ्चरन्ति तेषाम् आतिथ्यार्थं व्यवस्थाम् अपि कृतवान् राजा। एतेन क्रमेण प्रजानां कष्टं निवारयन् अपारां कीर्तिं प्राप्तवान् धर्मसिन्धुः।





# व्याघ्रमन्त्रः

कस्मिंश्चित् ग्रामे पूर्वं सोमशर्मा नाम कश्चित् आसीत्। अपूर्वाः मन्त्राः ज्ञातव्याः इति तस्य इच्छा। मन्त्रबलेन मनुष्यः पशुरूपं प्राप्तुं शक्नोति इति सः श्रुतवान् आसीत्। एतादृशान् मन्त्रान् संन्यासिनः जानन्ति इत्यपि तेन श्रुतम् आसीत्। एषु दिनेषु कश्चित् संन्यासी तं ग्रामम् आगतवान् आसीत्। सः संन्यासी भक्तानाम् अभीष्टं पूरयति इति, अष्ट दिनानि यावत् एव तत्र स्थास्यति इति च ज्ञातवान् सोमशर्मा।

संन्सासिनः सकाशात् कः मन्त्रः ज्ञातव्यः इति पत्नीं पृष्टवान् सोमशर्मा। ''अरण्ये प्रबलः प्राणी व्याघ्रः। अतः व्याघ्रमन्त्रस्य सम्पादनम् एव वरम्'' इति उक्तवती सोमशर्मपत्नी। एतत् अङ्गीकृत्य सोमशर्मा संन्यासिनं स्वगृहम् आनीय सत्कृतवान्। भोजनस्य अनन्तरं संन्यासी यदा विश्रान्तिसुखम् अनुभवन् आसीत् तदा सोमशर्मा स्वस्य इच्छां निवेदितवान्।

''अन्यत् किमपि प्रार्थयतु। यतः व्याघ्रमन्त्रज्ञानं क्लेशाय भवेत्। अतः व्याघ्रमन्त्रम् अहं सामान्यान् न बोधयामि'' इति उक्तवान् संन्यासी।

किन्तु सोमशर्मा पुनः पुनः प्रार्थितवान् यत् व्याघ्रमन्त्रः उपदेष्टव्यः एव इति। तदा संन्यासी उक्तवान्– ''मनोविनोदार्थं केवलम् एतत् उपयोक्तव्यं भवता। एतत् अङ्गीकृतं चेत् व्याघ्रमन्त्रम् उपदिशामि'' इति।

''नियमः अङ्गीकृतः चेदेव मन्त्रं पाठयामि इति वदति खलु? नियमबन्धनं विना कमपि एतं मन्त्रम् उपदिशति वा भवान्?'' इति पृष्टवान् सोमशर्मा।

''आम्। महाराजादीन् तथा बोधयामि। दुष्टसंहारादिनिमित्तं ते तस्य उपयोगं

''पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा''

द्वारस्य भञ्जनार्थं प्रयत्नम् अकरोत् चापि।

व्याघ्रस्य घोरं रूपं व्यवहारं च दृष्ट्वा सोमशर्मपत्नी नितरां भीता। 'गर्जन् व्याघ्रः अट्टस्य उपरि ,स्थितायाः मम उपरि अपि आक्रमणं कुर्यात्' इति भीतिः तस्याः। भीतिवशात् सा द्वितीयं मन्त्रं विस्मृतवती। यावत् स्मर्यते" तावत् उच्चारयन्ती सा व्याघ्रस्य मुखस्य उपरि पीतमन्त्राक्षतान् क्षिप्तवती। किन्तु तेन किमपि प्रयोजनं न सिद्धम्। व्याघ्रः नखैः द्वारं भञ्जयित्वा बहिः आगच्छत्। गृहाणि दीपान् च दृष्ट्वा सः अरण्यं प्रति अधावत्। किञ्चित्कालस्य अनन्तरं सोमशर्मपत्नी मन्त्रं स्मृतवती। किन्तु इदानीं किं तेन प्रयोजनम्?

पत्युः दशां दृष्ट्वा दःखिता अभवत् सोमशर्मपत्नी। सा प्रतिवेशिनः उक्तवती यत् कार्यार्थं गतः मम पतिः इतोऽपि न प्रत्यागतः इति। एवम् एव मासद्वयम् अतीतम्। कदाचित् सोमशर्मपत्न्याः अनुजः तत्र आगतवान्। एषा अनुजं प्रवृत्तं समग्रं निवेदितवती। अनन्तरं तौ उभयविधान् अपि मन्त्राक्षतान् स्वीकृत्य धैर्येण अरण्यं प्रति प्रस्थितवन्तौ। मुखे कृष्णकालकं यस्य अस्ति तादृशस्य व्याघ्रस्य अन्वेषणं कर्तुम् उद्युक्तौ च।

'कृष्णकालकयुक्तः नूतनः कश्चन व्याघ्रः ग्रामाणाम् उपरि अकस्मात् आक्रमणं कृत्वा पशून् जनान् च मारयति' इति जनाः राजानं निवेदितवन्तः। राजा मृगयार्थम् अरण्यं प्रति प्रस्थितवान्। सर्वत्र अन्विष्य कुत्रापि



कृष्णकालकयुक्तं व्याघ्रम् अप्राप्य विश्रान्त्यर्थं वृक्षस्य अधः उपविष्टवान्।

तावता समीपे एव घोरं व्याघ्रगर्जनं श्रुतम्। राजा आश्चर्येण परिवृत्य दृष्टवान्। कृष्णकालकयुक्तः व्याघ्रः एव सः! स च व्याघ्रः राज्ञः उपरि आक्रमणम् अकरोत्।

राजा यावत् खड्गम् आक्रष्टुम् उद्युक्तः तावता व्याघ्रः मानवरूपं प्राप्तवान् आसीत्। स च सोमशर्मा। सोमशर्मणः एकः हस्तः राज्ञः कण्ठे अस्ति। 'अरण्यप्राप्तिः कथम्? कण्ठे राज्ञः ग्रहणं कथम्?' इत्यादिकं न जानाति सोमशर्मा।

सः राजानं नमस्कृत्य भीत्या कम्पमानस्वरेण प्रार्थितवान्– "प्रभो, क्षन्तव्यः अहम्। किं प्रवर्तमानम् अस्ति इति न जानामि अहम्" इति।

तावता कस्माच्चित् वृक्षात् काचित् स्त्री अवतीर्य आगतवती। 'एषा वनदेवता स्यात्। एषा एव मां रक्षितवती' इति भावयित्वा राजा तां नमस्कृतवान्।

किन्तु तथा आगतवती न वनदेवता, अपि तु सोमशर्मपत्नी। ताम् अनुसृत्य तस्याः अनुजः अपि तत्र आगतः। तौ दृष्ट्वा आश्चर्येण पृष्टवान् सोमशर्मा– "कथम् अत्र आगतवन्तौ भवन्तौ?" इति।

सोमशर्मपत्नी प्रवृत्तं समग्रं निवेदितवती। अनुजेन सह अरण्ये व्याघ्रम् अन्विष्यन्ती अटन्ती सा दूरात् एव व्याघ्रं दृष्टवती, वृक्षम् आरुह्य उपविष्टवती च। यदा व्याघ्रः राज्ञः उपरि आक्रमणम् अकरोत् तदा सा मन्त्रं जपन्ती पीतमन्त्राक्षतान् व्याघ्रमुखे पातितवती। तदा व्याघ्ररूपी सोमशर्मा मानवरूपं प्राप्नोत्।

राजा प्रशंसावचनानि उक्त्वा राजधानीं प्रतिगतवान्। अल्पे एव काले सोमशर्माणं राजास्थाने उत्तमे उद्योगे नियोजितवान् सः। सोमशर्मा राजानं व्याघ्रमन्त्रम् उपदिष्टवान्। ततः मासाभ्यन्तरे संन्यासी सोमशर्मणः गृहम् आगतवान्। व्याघ्रमन्त्रः योग्याय उपदिष्टम् इति ज्ञात्वा सः सन्तोषं प्रकटितवान्।



## कूर्ममुखे अश्रूणि



हरिद्वर्णीयाः कूर्माः आत्मनः भाराधिक्यस्य कारणतः महता कष्टेन भूमौ सञ्चरन्ति। एवं सञ्चारसमये तेषां मुखे अश्रूणि दृश्यन्ते। सञ्चरणे असमर्थाः ते अश्रूणि स्रावयन्ति इति सामान्यानां भावना। वस्तुतस्तु समुद्रवाससमये कूर्मशरीरे यः लवणांशः प्रविशति स च अश्रुरूपेण बहिः निस्सरति।

## अपायकारी मीनः

मीनेषु दीर्घपुच्छयुक्ताः टेकीजातीयाः मीनाः एव अपायकारिणः इति भाव्यते। यत्र जलं न्यूनं भवति तत्र एतेषां पुच्छं सिकतासु लीनं भवति। यदि अज्ञात्वा एतस्य उपरि पादः स्थाप्येत तर्हि एतेषां पुच्छस्य अग्रभागतः विषम् उद्गच्छति। विषस्य परिणामतः स्प्रष्टुः शरीरे महती वेदना उत्पद्यते, मरणम् अपि सम्भाव्यते कदाचित्।



## तरणं न जानाति

गोरिल्लानामकाः प्राणिनः तरणं सर्वथा न जानन्ति।



# नूतनः स्यूतः

| | | |
|---|---|---|
| I– | नूतनः स्यूतः खलु! आकर्षकः अस्ति। कति रूप्यकाणि दत्तवान्? | A new bag, eh! Attractive really? How much did you pay? |
| II– | पञ्चत्रिंशत् रूप्यकाणि। | Just thirtyfive rupees. |
| I– | स्यूतस्य मूल्यं न अधिकम्। कुत्र क्रीतवान्? | Not much isn't it? Where is it available? |
| II– | सुभाषनगरे। मार्गपार्श्वे बहवः स्यूतादीन् प्रसार्य उपविशन्ति खलु? ततः क्रीतवान्। | In Subhash Nagar there are many bag sellers on the pavement. I bought it from one of them there. |
| I– | स्यूतः बहुसमीचीनः अस्ति। मया अपि एतादृशः एव स्यूतः क्रेतव्यः। गत्वा स्यूतं क्रीत्वा आगच्छाम वा? | A nice bag indeed. I too would like to buy one, Can you come with me? |
| II– | मम आगमनं किमर्थम्? भवान् एव सुभाषनगरं गच्छतु। मार्गपार्श्वे विक्रेतारः बहवः भवन्ति। यः स्यूतः रोचते तं क्रीणतु। | Where is the need for me to go with you? You could go alone and buy from whoever you like. |
| I– | मार्गपार्श्वे क्रयणं नाम मूल्ये विवादः भवेत् एव। अतः भवतः साहाय्यं प्रार्थितवान्। | Pavement sellers are known to cheat their customers. So I thought I should take you along. |
| II– | अद्य श्वः वा मम समयावकाशः एव नास्ति खलु? | I have no time today and tomorrow. Otherwise I would have accompanied you. |
| I– | भवतः यदा समयावकाशः भवति तदैव गच्छाम। | Whenever you have time tell me, we will go. |
| II– | कदा गमनम् इति श्वः सायङ्काले सूचयिष्यामि। अस्तु वा? | As you like. I will let you know tomorrow evening. OK? |
| I– | अस्तु तावत्। | OK. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

## विजितां शीर्षिकां नवम्बर्-९१ मासे प्रकटयिष्यामः।



S. S. Ghatege



K. P. A. Swamy

*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गराव्मार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जुलै'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **आत्मजे रुदति, मातुः हासः न शोभते।**

द्वितीयचित्रम् - **बकाय आहारदानम्, आवयोः रोचते।**

प्रेषकः - एन्. महेश्वरन्, अम्बु अच्चगम्, ९७, नाडार्मार्गः (द्वितीयः), कोयम्बत्तूरु-६४१००१




**Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.**


---

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अट्टः - Upstairs
अनुवृत्तम् - Has continued
अपत्यम् - Child
अवलम्बते - Depends
अहमहमिका - Overtaking
आधिः - Mortgage
आपाततः - Outward appearence
आवुत्तः - Brother-in-law
इतिवृत्तम् - Report
उपचयः - Crop
उपधानम् - Pillow
उष्णीषः - Turban
कङ्कणम् - Bracelet
कोटरः - Hollow of a tree
तडागः - Lake
तन्द्रा - Drowsiness
द्रवति - Melts
निम्बवृक्षः - Neem tree
निर्वीर्यः - Incapable
पीतः - Of yellow colour
प्रकोष्ठः - Room
प्रपास्थानम् - Roadside free water booth
भञ्जनम् - To break
भल्लूकः - Bear
भषणम् - Barking
मत्कुणः - Bed-bug
यथामति - To the best of one's ability
रक्तः - Red
रोम - The hair on the body
वटवृक्षः - Banyan tree
वलति - Bends
विपणिः - Market
विपरीतः - Opposed
शिथिलीकृतः - Loosened
शुनकः - Dog
सन्धिः - Agreement
सर्वकारः - Government
स्कन्धः - Shoulder
स्थगितवान् - Stopped
स्फुलिङ्गः - Spark of fire

* * *